## ॥ अथ सांवत्सरिक श्राद्धविधिः ॥

तीर्थं ह्ययं तीर्थमेव समानानां भवति मानः शंसो अररुषो धूर्तिः प्रणङ्मर्त्यस्य रक्षाणो ब्रह्मणस्पते ॥ वसोः पवित्रमसि शतधारं वसूनां पवित्रमसि सहस्रधारमायक्ष्माव: प्रजया संसृजामि रायस्पोषेण बहुला भवन्तीः ॥ आशीर्वाद। परमात्मने पुरुषोत्तमाय पञ्चभूतात्मकाय विश्वात्मने मन्त्रनाथाय आत्मने नारायणाय आधारशक्त्यै समालभनं गन्धो नमः अर्घो नमः पुष्पं नमः ॥ स्वप्रकाशो महादीपः सर्वतस्तिमिरापहः। प्रसीद ममगोविन्द दीपोयं परिकल्पितः॥ वनस्पतिरसो दिव्यो गन्धाढ्यो गन्धर्वत्तमः। आधारः सर्वदेवानां धूपोयं परिकल्पितः ॥ नमो धर्मनिधानाय नमः स्वकृतसाक्षिणे। नमः प्रत्यक्षदेवाय भास्कराय नमो नमः ॥ यत्रास्ति माता न पिता न बन्धुर्भ्रातापि नो यत्र सुहृज्जनश्च। न ज्ञायते यत्र दिनं न रात्रिस्तत्रात्मदीपं शरणं प्रपद्ये ॥(आत्मने नारायणाय आधारशक्त्यै तत्सद्ब्रह्माद्यतावर्त्तिय, रद्यामुकमासस्यामुकपक्षस्य तिथावमुकायामात्मनो वाङ्मनःकायोपार्जितपापनिवारणार्थं महागणपतये कुमाराय श्रियै सरस्वत्यै लक्ष्म्यै विश्वकर्मणे द्वार्देवताभ्यः प्रजापतये ब्रह्मणे वास्तुदेवताभ्यः ब्रह्मविष्णुमहेश्वरदेवताभ्यः चातुर्वेदेश्वराय सानुचराय ऋतुपतये नाराय-

णाय मार्गशीर्षे रुक्मिणी सहिताय कृष्णाय। श्रीसहिताय केशवाय पौषे प्रियास० अनन्ताय।
वागीश्वरीस० नारायणाय माघे प्रीतिस० अच्युताय। कान्तास० माधवाय (फाल्गुणे, शक्तिस०
चक्रिणे। क्रियास० गोविन्दाय चैत्रे सिद्धिस० वैकुण्ठाय। शक्तिस० विष्णवे वैशाखे श्रीस०
जनार्दनाय। विभूतिस० मधुसूदनाय ज्येष्ठे महिमास० उपेन्द्राय। इच्छास० त्रिविक्रमाय
आषाढे लक्ष्मीस० यज्ञपुरुषाय। प्रीतिस० वामनाय श्रावणे कान्तिस० वासुदेवाय। रतिस०
श्रीधराय भाद्रपदे प्राप्तिस० हरये। मायास० हृषीकेशाय आश्वियुजे प्राकाम्यास० योगीश्वराय।
धी० पद्मनाभाय कार्तिके लघिमास० पुण्डरीकाक्षाय। महिमास० दामोदराय मलिम्लुचे श-
क्तिस० योगीशाय। सत्यभामास० नरकारये निष्कलास० महामार्तण्डाय। दुर्गायै त्र्यम्ब-
काय वरुणाय यज्ञपुरुषाय अग्निष्वात्तादिभ्यः पितृगणदेवताभ्यः। वासुदेवादिभ्यो विष्णु-
पञ्चायतनदेवताभ्यः महागायत्र्यै सावित्र्यै सरस्वत्यै हेरकादिभ्यो वटुकादिभ्यो धूपदीपसं-
कल्पात्सिद्धिरस्तु दीपो नमः धूपो नमः॥ अपसव्येन नमः पितृभ्यः प्रेतेभ्यो नमो धर्माय वि-
श्रा० ष्णवे। नमो यमाय रुद्राय कान्तारपतये नमः। अद्यतावत् पित्रे पितामहाय प्रपितामहाय। मात्रे
पितामह्यै प्रपितामह्यै। मातामहाय प्रमातामहाय वृद्धप्रमातामहाय। मातामह्यै प्रमातामह्यै वृद्ध-
१४ प्रमातामह्यै। समस्तभ्रातापितृभ्यो द्वादशदैवतेभ्यः पितृभ्यः दीपस्स्वधा धूपस्स्वधा॥ पुनः

(3)

कलशयाग देवताभ्य
क्षेत्रेश्वर

अद्यतावत् पित्रे पितामहाय प्रपितामहाय पित्रे एवं वा मात्रे सांवत्सरिके श्राद्धे दीपस्स्वधा धूपस्स्वधा ॥ सव्येन गायत्र्यै नमः ३ अद्यन्तावत् महागणपतेः कुमारस्य श्रियः सरस्वत्याः लक्ष्म्याः विश्वकर्मणः द्वार्देवतानां प्रजापतेः ब्रह्मणः कलशदेवतानां ब्रह्मविष्णुमहेश्वरदेवतानां चातुर्वेदेश्वरस्य सानुचरस्य ऋतुपतेःनारायणस्य दुर्गायाः त्र्यम्बकस्य वरुणस्य यज्ञपुरुषस्य अग्निष्वात्तादीनां पितृगणदेवतानां वासुदेवादीनां विष्णुपञ्चायतनदेवतानां महागायत्र्याः सावित्र्याः सरस्वत्याः हेरकादीनां वटुकादेनां आत्मनो॰पितुः पितामहस्य प्रपितामहस्य। मातुः पितामह्याः प्रपितामह्याः। मातामहस्य प्रमातामहस्य वृद्धप्रमातामहस्य। मातामह्याःप्रमातामह्याः वृद्धप्रमातामह्याः पितुः वा मातुः सावत्सरिके श्राद्धे कलशयागपूजनं क्षेत्रेश्वरपूजनमहं करिष्ये ओंकुरुष्व तिलसर्षपयवान्विकीर्य। एवं महागणपतेः॰ इदमासनं नमः॥ महागणपतये॰ युष्मान्वः पूजयामि ओंपूजय। महागणपतिं कुमारं श्रियं सरस्वतीं लक्ष्मीं विश्वकर्माणं द्वार्देवताः प्रजापतिं ब्रह्माणं कलशदेवताः ब्रह्मविष्णुमहेश्वरदेवताः चातुर्वेदेश्वरं सानुचरं ऋतुपतिं नारायणं दुर्गां त्र्यम्बकं वरुणं यज्ञपुरुषं अग्निष्वात्तादीः पितृगणदेवताः वासुदेवादीः विष्णुपञ्चायतनदेवताः महागायत्रीं सावित्रीं सरस्वतीं हेरकादीन् वटुकादीन् आवाहयिष्यामि ओं आवाहय। यवान्विकीर्य। पाद्यार्थमुदकं नमः। शन्नो देवीरभीष्टये आपो भव-

५

न्तु पीतये । शँय्योरभि स्रवन्तु नः ॥ लाजाश्च कुंकुमं चैव सर्वौषधिसमन्वितम् । दर्भांकुरं ज-
लं चैव पश्चाङ्गं पाद्यलक्षणम् ॥ -गवन्तः पाद्यं २ महागणपतये० पाद्यं नमः शेषंनिवार्य । पुनः
शन्नो देवी० । आपः क्षीरं कुशाग्राणि घृतं च दधि तण्डुलाः । यवाः सिद्धार्थकाश्चेति ह्यर्घ्य-
मष्टाङ्गमुच्यते । भगवन्तोऽर्घ्यं ३ महागणपत कुमार श्रीः सरस्वति लक्ष्मीः विश्वकर्मन् द्वारदेव-
ताः प्रजापते ब्रह्मन् कलशदेवताः ब्रह्मविष्णुमहेश्वरदेवताः चातुर्वेदेश्वर सानुचर ऋतुपते
नारायण दुर्गे त्र्यम्बक वरुण यज्ञपुरुष अग्निश्वात्तादयः पितृगणदेवताः वासुदेवादयो वि-
ष्णुपञ्चायतनदेवताः महागायत्रि सावित्रि सरस्वति हेरकादयो वटुकादयः इदं वोऽर्घ्यं नमः ॥
महागणपतये० समालभनं गन्धो नमः अर्घो नमः पुष्पं नमः दीपो नमः धूपो नमः वासो न-
मः । एतासां देवतानामर्घ्यदानाद्यर्चनविधिः सर्वः परिपूर्णोऽस्तु । अन्नं नमः २ आज्यं २ अ-
द्य दिने अद्य यथासङ्कल्पात्सिद्धिरस्तु । अन्नहीनं क्रियाहीनं विधिहीनं द्रव्यहीनं मन्त्रहीनं
च यद्गतं तत्सर्वमच्छिद्रं सम्पूर्णमस्तु एवमस्तु ॥ शन्नो देवी० एताभ्यो० अपोशानं नमः
श्रा० आचमनीयं नमः ॥ पुनः शन्नो देवी० एताभ्यो० दक्षिणायै तिलहिरण्यरजतनिष्कर्ण द-
दानि । एता देवताः सदक्षिणा अनेन प्रीयंतां प्रीताः सन्तु । अपसव्येन अद्यतावत पितुः पिता-
१६ महस्य प्रपितामहस्य पितुः सांवत्सरिके श्राद्धे तस्य परलोके वैकुण्ठपदवीप्राप्त्यर्थमात्मनः

पुण्यवृद्ध्यर्थं वा मातुस्तस्याः पर० कलशप्रीत्या तिलाम्भसा पुण्यवृद्धिरस्तु स्वर्गप्राप्तिरस्तु
कलशदेवताः प्रीयन्तां प्रीताः सन्तु ॥ सव्येन क्षेत्रेश्वराः प्री० ॥ तद्विष्णोरिति कलशे पुष्पद्वयम्
अथ व्याहृति वैश्वदेवम् ॥ पात्रं तिला० निर्दग्धं० अग्निं परिसमूह्य ६ पुरस्तात् ॥ अग्नये
युकारू० गन्धादि इदं हविः० । मुक्ताविद्रुम० इति गायत्रीब्राह्मणाम् ॥ अनेन० पितुर्वा मातुः
सांवत्स० महागायत्री सावित्री सरस्वती सव्याहृतयः प्री० ॥ अध्वर्योयं० ध्येयः सदा०
हिरण्यवर्णा० तद्विष्णोः० विष्णुपञ्चायतनदेवताभ्यः स्वाहा हेरका० ॥ यौवे श्वाना० ए-
दाग्नं ॥ अनेन० पितः महागणपतिः० तिलतण्डुलहोमैः प्री० ॥ वैश्वदेवस्य सिद्धस्य सर्वतो-
ग्रस्य अन्नस्य जुहोतिपाकस्य घृतेन संलिप्य स्वस्त्यस्तु शृतमभिघार्य ॥ अग्नये स्वाहेत्यु-
रतः सोमाय स्वाहेति दक्षिणतः तयोर्मध्ये मित्राय वरुणाय इन्द्राय इन्द्राग्नीभ्यां विश्वे-
योदेवेभ्यः प्रजापतये अनुमत्यै धान्वन्तरये वास्तोष्पतये वासुदेवाय सङ्कर्षणाय प्रद्युम्नाय
निरुद्धाय सत्याय पुरुषाय अच्युताय माधवाय गोविन्दाय सहस्रनाम्ने विष्णवे लक्ष्मी-
हिताय नारायणाय ॥ अमृतेशमुद्रया० सावित्राणि० नित्यकर्म यागदेवताभ्यो नमो नैवेद्यं
वेदयामि नमः ॥ पूर्वाग्रान्दर्भानास्तीर्य ॥ वृक्षाय नमः उपवृक्षाय नमः अम्बा नामासि नमस्ते
तानामा० नितत्नीनामा० चुपर्णीकानामा० अभ्रयन्तीनामा० मेघयन्तीना० वर्षयन्तीना० १७

नन्दिनि नमस्ते सुभगे न० सुमङ्गले० भद्रङ्करि० श्रियै हिरण्यकेश्यै नमः वनस्पतिभ्यो० ध-
र्माय० अधर्माय० मृत्यवे० मरुद्भ्यो० वरुणाय० विष्णवे० वैश्रवणायराज्ञे० भूतेभ्यो० इन्द्रा-
य० इन्द्रपुरुषेभ्यो० यमाय० यमपुरुषेभ्यो० सोमाय० सोमपुरुषेभ्यो० वरुणाय० वरुणपुरु-
षेभ्यो० ब्रह्मणे० ब्रह्मपुरुषेभ्यो० ऊर्ध्वमाकाशाय० स्थण्डिले० दिवाचरेभ्यो भूतेभ्यो० नक्तं-
चरेभ्यो भूतेभ्यो नमः । तत्तादिभ्यः षट्त्रिंशद्देवताभ्योऽन्नं नमः॥ आचमनीयं नमः ॥
अपसव्येन । दक्षिणाग्रान्दर्भानास्तीर्य ॥ समस्तमातापितृभ्यो द्वादशदैवतेभ्यः पितृभ्यो भूपृष्ठे द-
र्भास्तरणे दर्भतिलोदकेनावनेजनं स्वधा ॥ उशन्तस्त्वा हवामहे उशन्तः समिधीमहि । उश-
न्नुशत आवह पितॄन्हविषे अत्तवे ॥ तिलास्तोयं तथा क्षीरं दीपधूपौ बलिस्तथा । मधुसर्पिः
समायुक्तमष्टाङ्गमन्नसम्भवम् ॥ देवताभ्यः पितृभ्यश्च महायोगिभ्य एवच । नमः स्वधा च
स्वाहा च नित्यमेव भवन्त्विह ३ ॥ अद्यतावत् । पितामुकामुकगोत्र एतत्तेऽन्नं ये च त्वानु । पि-
तामह एतत्ते० प्रपितामह ए० ॥ मातः एतत्तेऽन्नं याश्च त्वानु । पितामहि ए० प्रपितामहि
श्रा० ए० ॥ मातामह० प्रमातामह० वृद्धप्रमातामह० ॥ मातामहि० प्रमातामहि० वृद्धप्रमातामहि
ए० ॥ एवमन्यपितरः । मातृपक्ष्यास्तु ये केचिद्ये चान्ये पितृपक्षजाः । गुरुश्वशुरबन्धूनां
 कुलेषु समुद्भवाः ॥ ये प्रेतभावमापन्ना ये चान्ये श्राद्धवर्जिताः । अन्नदानेन ते सर्वे लभन्

तृप्तिमुत्तमाम् ॥ समस्तमातापितृभ्यो अन्नं स्वधा अन्नलेपं निवार्य । समस्तमातापि० समालभनं गन्धः स्वधा । समस्त० अर्घः स्वधा पुष्पं स्वधा । सम० दीपः स्वधा धूपः स्वधा । सम० भक्ष्यभोज्यफलमूलबलिनैवेद्यमाहाराद्यन्नं स्वधा । सम० तिलमधुमिश्रमुदकपात्रमाचमनीयं स्वधा । समस्त० हिमपानं स्वधा क्षीरपानं० मधुपानं० तिलोदकं स्वधा उदकतर्पणं स्वधा हिमं २ रजतं २ ॥ सव्येन । वसन्ताय नमः, ग्रीष्माय नमः, वर्षाभ्यो नमः, शरदे नमः, हेमन्ताय नमः, शिशिराय नमः, षड्तुभ्यो नमः, ॥ अग्नये स्विष्टकृते स्वाहा । हस्तौ प्रक्षाल्य ॥ प्राणायामः । विसृजामि ३ नयामि ॥ धर्मं देहि धनं देहि पुत्रपौत्रांश्च देहि मे । आयुरारोग्यमैश्वर्यं देहि मे हव्यवाहन । हव्यं वहसि वह्ने त्वं कव्यं वहसि पावक । मह्यं धनायुरैश्वर्यं दत्त्वा गच्छ हुताशन । भक्तिं देहि श्रियं देहि सुखं देहि स्वतन्त्रताम् । देहि भोगं च मोक्षं च मनोभिलषितं मम । गच्छ गच्छ सुरश्रेष्ठ ब्रह्मविष्णुमहेश्वराः । यत्र देवालयाः सर्वे तत्र गच्छ हुताशन । तेजोसि तेजो मयि देहीत्यात्मानं देहि ॥ भगवन्यक्ष्म एतत्तेऽन्नं नमः । भगव० आचमनीयं नमः ॥ कण्ठोपवीती हन्तमनुष्येभ्यः सनकादिभ्य ऋषिभ्योन्नं नमः आचमनीयं नमः ॥ ततः श्राद्धमारभेत ॥ सव्येनाचम्य । श्राद्धारम्भे तथा चान्ते पाद्ये गन्धे तथैव च । विकिरे पिण्डदाने च षट्सु त्वाचमनं स्मृतम् । पृच्छासनाक्षय्य षष्ठी प्रथमा चार्घ्यपिण्डयोः । द्विती-



या वाहने चैव चतुर्थी शेषकर्मणि ॥ श्राद्धकाले गयां ध्यात्वा ध्यात्वा देवं गदाधरम् । स्वा-
न्पितॄन्मनसा ध्यात्वा पश्चाच्छ्राद्धं समारभेत् ॥ गायत्र्यै नमः ३ अपसव्येन । देवताभ्यः० अ-
घ्यतावत् । पितुः पितामहस्य प्रपितामहस्य पितुः वा मातुः संवत्सरिकं श्राद्धं त्रैपुरुषं वैश्वदेव-
पूर्वकं ब्राह्मणपूजनमहं करिष्ये ॐ कुरुष्व ॥ तिलान्विकीर्य ॥ निहन्मि सर्वं यदमेध्यवद्भवेद्धुता-
श्च सर्वे सुरदानवा मया । रक्षांसि यक्षाः सपिशाचगुह्यका हता मया यातुधानाश्च सर्वे ॥ स-
व्येन । विश्वेषां देवानामिदमासनं नमः विश्वेभ्यो देवेभ्यो ब्राह्मणं त्वां भोजयामि ॐ भोजय
विश्वान्देवानावाहयिष्यामि ॐ मावाहय ॥ यवान्विकीर्य ॥ आगच्छन्तु महाभागा विश्वेदेवा वर-
प्रदाः । ये येत्र विहिता श्राद्धे सावधाना भवन्तु ते ॥ शन्नो देवी० । लाजाश्च० भगवन्तः पा
द्यं २ विश्वेभ्यो देवेभ्यः पाद्यं नमः । शेषं निवार्य । पुनः शन्नो देवी० । आपः द ० भगव
न्तोर्घ्यं २ विश्वेदेवाः इदं वोर्घ्यं नमः । विश्वेभ्यो देवेभ्यः समालभनं गन्धो नमः अर्घो नम
पुष्पं नमः दीपो नमः धूपो नमः वासो नमः । विश्वेषान्देवानामर्घ्यदानाद्यर्चनविधिः सर्व
श्रा० परिपूर्णोस्तु ॥ ओमासश्चर्षणीधृतो विश्वेदेवास आगत । दाश्वासो दाशुषः सुतम् । उपया
गृहीतोसि विश्वेभ्यस्त्वा देवेभ्य एष ते योनिर्विश्वेभ्यस्त्वा देवेभ्यः । विश्वेदेवास आग
२० शृणुताम इमं हवं इदं बर्हिर्निषीदत ॥ आपःप्रदाय अपसव्यं कृत्वा । पितुः पितामहस्य प्रपि

(9)



तामहस्य एवं मातुर्वा पितुः सांवत्सरिके श्राद्धे इदमासनं स्वधा । पित्रे पितामहाय प्रपितामहाय पित्रे वा मात्रे सांवत्स० ब्राह्मणं त्वां भोजयामि ॐ भोजय पितृनावाहयिष्यामि ॐ मावाहय । तिलान्विकीर्य । श्राद्धानुवाकं तूष्णीमार्थम् । अपयन्त्वसुराः पितृरूपा येरूपाणि प्रतिमुच्याचरन्ति परापरो निपुरो ये हरन्ति अग्निष्टाल्लोकान्प्रणुदन्त्वस्मान् । अपेतो यन्त्वसुरा ये पितृपदः उदीरतामवर उत्परास उन्मध्यमाः पितरः सोम्यासः असुंय्यईयुरवृका ऋतज्ञास्तेनोवन्तु पितरो हव्येषु एतपितरो मनोजवरागच्छन्त पितरो मनोजवः । येनिखाता ये परोप्ता गर्भाधिऽवपेदिरे सर्वस्तानग्न आवह पितृन्हविषे अत्तवे । आगच्छन्तु पितरो मनोजवसः पितरः पितरः शुन्धध्वम् आ मे यन्तु पितरो भागधेयं विराजाहूताः सलिलात्समुद्रात् अस्मिन्यज्ञे सर्वकामाल्लभन्तामक्षीयमाणानुपजीवत्वेनान् । अन्तर्दधे पर्वतैरन्तर्मह्या पृथिव्या दिवा दिग्भिरनन्ताभिरन्तरन्यान्पितृन्दधे । अन्तर्दधे ऋतुभिरहोरात्रैःससन्धिकैः अर्धमासैश्च मासैः ऋतुभिः परिवत्सरैः संवत्सरस्य क्लृप्तिभिश्चान्तरन्यान्पितृन्दधे ।। यास्तिष्ठन्तीति त्रिष्टुप् । यास्तिष्ठन्ति या धावन्ति या अद्भुग्धाःपरिसस्रुपीः अद्भिर्विश्वस्य धत्रीभिरन्तरन्यान्पितृन्दधे । अमृता वागमृता प्रापोग्निर्वाचोमृतं तत्रिवृदेकधाम ताभिर्मत्प्रत्ताभिः स्वधया मदध्वमिहासभ्यं वसीयोस्तु देवा तन्मे माता प्रलुलोभ यश्चचरानन्नुव्रतं तन्मे रेतः पिता वृङ्क्तां माभूरन्योवपद्यताम् ॥ १ ॥ या- श्रा०

२१

स्तिष्ठन्ति० यन्मे पितामही २ यास्ति० यन्मे प्रपितामही ॥ ३ ॥ लाजाश्च० भगवन्तः पाद्यं २
पित्रे वा मात्रे सांवत्सरिके श्राद्धे पाद्यं स्वधा। शेषं निवार्य। सव्येनाचम्य अपसव्येन। यास्ति-
ष्ठन्तीति पट्। यास्तिष्ठन्ति० यन्मे माता १ यास्ति० यन्मे माता २ यास्ति० यन्मे पितामही ३
यास्ति० यन्मे माता ४ यास्ति० यन्मे पितामही ५ यास्ति० यन्मे प्रपितामही ॥ ६ ॥ आपः
क्षीरं० भगवन्तोऽर्घ्यं २ पितः पितामह प्रपितामह इदं वोऽर्घ्यं स्वधा। पवित्रं निवार्य। पित्रे वा
मात्रे सांव० समालभनं गन्धः स्वधा। गन्धलेपं निवार्य। सव्येनाचम्य अपसव्येन। पित्रे वा
मात्रे अर्घः स्वधा पुष्पं स्वधा। पित्रे दीपःस्वधा एवं वासांसि स्वधा ॥ दक्षिणाग्रान्दर्भानास्तीर्य
सव्येन। शुद्धन्तां लोकाः अपसव्येन। पितृषदनः पितृषदनमसि पितृभ्यः स्थानमसि पितृभ्यः
समाल० पितृ० अर्घस्वधा पुष्पं० पि० दीपःस्वधा० पितृभ्य आच्छादनं वासांसि स्वधा। पि-
तृणामर्घ्यदानाद्यर्चनाविधिः सर्वः परिपूर्णोऽस्तु ॥ आदित्या रुद्रा वसवो मे सदस्यास्तेषां स-
व्ये स्वधया मदध्वं स्वधां वहध्वममृतस्य योनिं यात्र स्वधा पितरस्तां भजध्वम् ॥ सव्येन।
आ० इदमन्नमिदं देवेभ्यः शृतमभिघार्य। अपसव्येन। इदमन्नं पितृभ्यः शृतमभिघार्य प्रक्षाल्य त-
ण्डुलान्पवित्रान्तर्हितानावपति प्रक्षाल्य मूलतो मेक्षणमवदधाति ॥ अग्नावधिश्रित्य तत्र चा-
२२ भिघार्य दक्षिणत उद्वास्य पुनश्चाभिघार्य ॥ पित्र्ये दक्षिणपार्श्वमाग्नेः पुरस्तात्। सोमवत्यै श्रियै

(11)

धामद

अन्नपूर्णाभगवत्यै समालभनं गन्धो नमः अर्घो नमः पुष्पं नमः ॥ श्रियं देवीं० ॥ अग्नौ करणाणि ॐ कुरु सोमाय पितृमते स्वधा नमः १ अग्नये कव्यवाहनाय स्वधा नमः २ तूष्णीं पात्रेषु निक्षिपेत् इत्यग्नौ हुत्वा (ये मामकाः पितरः पार्थिवासो ये अन्तरिक्षे ये दिवि ये समुद्रे ये वाचमाप्त्वा अमृतावभूवुस्तेस्मिन्यज्ञे सर्वकामाँल्लभन्ताम् ॥ एतद्वः पितरो भागधेयं पात्रेषु दत्तममृतं स्वधावत् । अक्षीयमाणमुपजीवत्वेनं मया प्रत्तं स्वधया मदध्वम् ॥ अयं यज्ञः परमो यः पितृणां पात्रेषु देयं हविरग्र्यमग्नेः । मनश्च वाक्च पितरो वःप्रदानैराश्विभ्यां प्रत्तं स्वधया मदध्वम् ॥ एषा व ऊर्गेषा वःस्वधा तामत्त च पिवत च मा च वः क्षिष्ट ये ह पितर ऊर्ग्देवतास्तस्यै वयं ज्योग्जीवन्तो भूयास्म आ मा स्वपक्कममृतं निविष्टं मया प्रत्तं स्वधया मदध्वं क्षीरं घृतं वासिच्य ॥ सव्येन । दे देवहविषि पिन्वमानं विश्वेषु भूतेषु पृथग्निविष्टं क्षीरं घृतं वासिच्य । विश्वेभ्यो देवेभ्योन्नं नमः २ अन्न मधु २ पृथिवी ते पात्रं द्यौरपिधानं ब्राह्मणस्य मुखेऽमृतं जुहोमि ऊर्गस्योर्जोदा ऊर्जं मे देहि ऊर्जं मयि धेहि अन्नं मे देह्यन्नं मयि धेहि अक्षतिरसि मा मे क्षिष्ठाऽमुत्रामुष्मिँल्लोक इह च ॥ इदं विष्णुर्विचक्रमे त्रेधा निदधे पदम् । समूढमस्य पांसुरे विष्णो ! हव्यं रक्षस्व ॥ विश्वेभ्यो देवेभ्यो यथोपस्थितं दत्तं दास्यमानेन सह सव्यञ्जनममृतमन्नं नमः । नमो देवेभ्यः । अपसव्येन । पित्रे सां० अन्नं स्वधा ३ पितामहाय अन्नं स्वधा ३

१

प्रपितामहाय अन्नं स्वधा ३ अन्नं मधु मधु० विष्णो कव्यं रक्षस्व ॥ पित्रे पिता० सांव० य-
थोपस्थितं दत्तं० अन्नं स्वधा स्वधा पितृभ्यः ॥ अद्य दिनेऽद्य यथासङ्कल्पातिसिद्धिरस्तु अन्न-
हीनं ० शन्नो देवी० विश्वेभ्यो देवेभ्योऽपोशानं नमः । अपसव्येन । यास्तिष्ठन्ति० पित्रे० सां०
अपोशानं स्वधा ॥ तिलमन्नं च पानीयं सकुशं तेषु चाग्रतः । विकिरेत्पितृभूतेभ्यो जपन्नपह-
ताइति ॥ अपहता असुरा रक्षांसि पिशाचा येदिषदः प्राश्नन्तु भवन्तोऽमृतं जुषध्वममृतं भु-
ञ्जीत ॥ सव्येन । यन्मे प्रकामादुतवाप्यकामादसामिद्धे ब्राह्मणे ब्राह्मणे वा । यत्स्कन्दति
निर्ऋतिः पाथमुग्रामग्निष्टत्सर्वं शुन्धतु उशन्तस्तेन पितरो मदन्तां तेन पूतेन पितरो मादय-
न्ताम् ॥ अहोरात्रैः ससन्धिकैरर्धमासैश्च मासैर्ऋतुभिः परिवत्सरैः संवत्सरस्य क्लृप्तिभिरन्त-
न्यान्पितृन्दधे । यद्वः क्रव्यादजहादेकमङ्गं पितृलोकं जनयञ्जातवेदाः । तद्व एतेन पुनराप्या-
यतामरिष्टासः पितरो मादयध्वम् । स्वधा वहध्वममृतस्य योनिं यात्र स्वधा पितरस्तां भ-
जध्वम् ॥ नारायणस्यार्पणम् । मधु वात ऋतायते मधु क्षरन्ति सिन्धवः, माध्वीर्नः सन्त्वोषधीः
श्रा० मधु नक्तमुतोषसो मधुमत्पार्थिवं रजः, मधु द्यौरस्तु नः पिता । मधुमान्नो वनस्पतिर्मधुमान
स्तु सूर्यः, माध्वीर्गावो भवन्तु नः । ॐ मधु ३ ॥ अन्तश्चरसि भू० । ब्रह्मार्पणं० । अमृतोप-
२४ स्तरणमसि स्वाहा ॥ दक्षिणाग्रान्दर्भानास्तीर्य । यास्तिष्ठन्ति० । पित्रे० सां० भूपृष्टे दर्भास्तरणे द-

भतिलोदकेनावनेजनं स्वधा ॥ उशन्तस्त्वा हवामह ॥ तिलास्तोयं० अष्टाङ्गं पिण्डसम्भवम् ॥
देवताभ्यः० ३ अद्यतावत् । पृथिवीदर्विरक्षता तृप्तिः स्वधाऽनुपदस्तां तां पृथिवीं दर्विमक्षतां
तृप्तिं स्वधामनुपदस्तामग्निरिव पृथिवीमुपजीव । पितः अमुकामुकगोत्र एष ते पिण्डः, ये चात्र
त्वान्वेषा ते स्वधा वसुभ्यः स्वधा षष्ठ एष ते लेपः अपउपस्पृश्य ॥ अन्तरिक्षं दर्विरक्षता तृ-
प्तिः स्वधाऽनुपदस्तां तामन्तरिक्षं दर्विमक्षतां तृप्तिं स्वधामनुपदस्तां वायुरिवान्तरिक्षमुपजीव
पितामहामुकामुकगोत्र एष ते पिण्डः ये चात्र त्वान्वेषा ते स्वधा रुद्रेभ्यः स्वधा पञ्चम एष ते
लेपः अपउ० ॥ द्यौर्दर्विरक्षता तृप्तिः स्वधाऽनुपदस्तां तां दिवं दर्विमक्षतां तृप्तिं स्वधामनु-
पदस्तां सूर्य इव दिवमुपजीव प्रपितामह अमुकामुकगोत्र एष ते पिण्डः ये चात्र त्वान्वेषा ते
स्वधा चतुर्थ एष ते लेपः अपउ० ॥ मूलपुरुषा भूमिस्वामिनः पितरः ! एष वः पिण्डः
स्वधा, ये च वोनुऽत्र पितरो मादयध्वम् । येत्र पितरः प्रेत. युष्मांस्तेनु य इह पितरो जीवा
अस्मांस्तेनु येत्र पितरः प्रेता यूयं तेषां वसिष्ठा भूया स्थ य इह पितरो जीवा वयं तेषां वर्षिष्ठा
भूयास्म ॥ एतानि वः पितरो वासांसि अतो नोन्यत्पितरो मायूढ्वं वीरान्नः पितरो दत्त पिण्ड- श्रा०
लेपं निवारयेत् । पित्रे वा मात्रे० सां० समालभनं गन्धः स्वधा । मूलपुरुषेभ्यः समा० । पित्रे०
अर्घः स्वधा पुष्पं स्वधा दीपः स्वधा धूपः स्वधा । पित्रे० सां० भक्ष्यभोज्यफलमूलबलिनैवेद्य- २५

मन्नं स्वधा ॥ पित्रे० तिलमधुमिश्रमुदकपात्रं० पित्रे० हिमपानं स्वधा० ॥ सव्येनाचम्य । वसन्ताय नमः० अपसव्येन । यास्तिष्ठन्ति० ऊर्जं वहन्तीरमृतं घृतं मधु पयः कीलालं परिस्रुतं स्वधा स्थ पितॄन्मे तर्पयत ॥ सव्येन । मा मे क्षेष्ठेति सतृणमन्नमभ्युक्ष्य । मा मे क्षेष्ठा बहु मे पूतमस्तु ब्रह्माणो मे जुषतामन्नमन्नम् । सहस्रधारममृतोदकं मे पूतमस्त्वेतत्परमे व्योमन् ॥ देवतायै बलिमुपहरेत्। सावित्राणि० महागणपतये० पितृगणदेवताभ्यो नमो नैवेद्यं निवेदयामि नमः ॥ अपसव्येन । सर्वमन्नमुपादाय सतिलं दक्षिणामुखः । वारिणाप्लाव्य तच्चान्नं पृच्छेत्प्रश्नत्रयं द्विजः । त्रिपदमन्नमानीय कच्चित्सम्पन्नं भोः सुसम्पन्नं तृप्यन्तु भवन्तः तृप्ताः स्मः शेषमन्नमिष्टैः सह ॥ अग्निदग्धाश्च ये जीवा येऽप्यदग्धाः कुले मम । भूमौ दत्तेन तृप्यन्तु तृप्ता यान्तु परां गतिम् ॥ येषां न पचते माता येषां न पचते पिता । उच्छिष्टं ये च काङ्क्षन्ति तेषां तृप्तिः स्वधा नमः ॥ सव्येन । असोमपाश्च ये देवा यज्ञभागविवर्जिताः । तेषामन्नं प्रदास्यामि विकिरं वैश्वदेवके ॥ तृप्तानाचम्य । अपसव्येन । विप्रानाचमेत् । पित्रे० सां०

श्रा० आचमनीयं स्वधा । सव्येन । विश्वेभ्यो देवेभ्य आचमनीयं नमः । अपसव्येन । यन्मे रामेत्य-

र्धप्रदक्षिणं कृत्वा प्रत्येत्य । यन्मे रामः शकुनिःश्वापदाश्च यन्मेशुचिः मन्त्रकृतस्य प्राशत् ।

२६ वैश्वानरः सविता तत्पुनातु तस्मिन्पूते देवता मादयन्तां तेन पूतेन पितरो मदन्ताम् ॥ या-

१५

स्तिष्ठन्ति० पित्रे० सांव० दक्षिणायै० तिल० ॥ सावित्राणि० प्रतिगृह्णामि । धरुणास्त्वा न-
यतु देवि दक्षिणेऽग्नये हिरण्यं तेनामृतत्वमशीय वयो दात्रे भूयान्मयो मह्यं प्रतिगृहीत्रे । कइ-
दं कस्मा अदात्कामः कामाय कामो दाता कामः प्रतिग्रहीता कामः समुद्रमाविशत्कामेन त्वा प्र-
तिगृह्णामि कामैतत्ते ॥ अभिरमन्तु भवन्तोभिरताःस्मः । देवाश्च पितरश्चैतत्पूतमत्रोपजीवताम-
स्मिल्लोके मां धत्त जीवेम शरदः शतं पश्येम शरदः शतम् । अथास्मभ्यमूर्जं धत्त ज्योतिर्ध-
त्ताऽजरं न आयुः । यदन्तरिक्षं पृथिवीमुत द्यां यत्पितरं मातरं वा जिहिंसिम अग्निर्नस्तस्मा-
देनसो गार्हपत्यः प्रमुञ्चतु चकृम यानि दुष्कृता ॥ तृप्यन्तु भवन्तः पितरो येच भवतेनु ये-
षामास्वाःशंसन्ते तृप्यत । तृप्यन्तु भवन्तः पितामहा ये च० । तृप्यन्तु भवन्तः प्रपितामहा
ये च० ॥ तृप्यन्तु भवत्यो मातरो याश्च भवतीरनु याश्चास्मा० । तृप्यन्तु भवत्यः पितामह्यो याश्च० । तृप्यन्तु भवत्यः प्रपितामह्यो याश्च० ॥ (एवं मातामहा इत्यादि) ॥ तृप्यत ३
एवमस्तु ॥ पितुः० सांवत्स० दत्तमन्नमक्षय्यमस्तु स्वधा इदमन्नमक्षय्यमस्तु स्वधा इति
विप्राः प्रतिब्रूयुः ॥ सव्येन । दातारो नोभिवर्धन्तां वेदाः सन्ततिरेवच । श्रद्धा चनो मा श्रा०
व्यगमद्बहु देयं चनो अस्तु । अन्नं चनो बहु भवेदतिथींश्च लभेमहि । याचितारश्च नः स-
न्तु मा च याचिष्म कंचन । एता एवाशिषः सत्याः सन्त्विति विप्राःप्रतिब्रूयुः ॥ सव्येन । २७

शन्नो देवी० विश्वेभ्यो देवेभ्यः दक्षिणायै० विश्वेदेवाः प्रीयन्तां० ॥ शन्नो भवन्तु वाजि-
नो हव्येषु देवत्राता मितद्रवाः स्वर्काः । जम्भयन्तोहिवृकं रक्षांसि सनेम्यस्मद्यूयमनमीवाः म-
संस्त्रावपात्रमुत्तानं कृत्वा ताभिरद्भिः पुत्रकामो मुखमनक्ति ॥ वाजेवाज (इति कुशविसर्जनम्)।
वाजे वाजे वत वाजिनो नो धनेषु विप्रा अमृता ऋतज्ञाः । अस्य मधु पिबत मादयध्वं तृप्ता
यात पथिभिर्देवयानैः ॥ आमा वाजस्येति पिण्डपरिषेकः । आ मा वाजस्य प्रसवोजगम्या
द्यामाद्यावापृथिवी विश्वरूपे । आ माऽगन्तां पितरं मातरं चा मा सोमो अमृतत्वेन गम्यात ।ज-
सव्येन । पृच्छां सम्पाद्य । गायत्र्यै नमः ३ अपसव्येन । देवताभ्यः अद्यतावत् पितुः सांव०गा-
त्रैपुरुषं वैश्वदेवपूर्वकं ब्राह्मणपूजनमच्छिद्रं सम्पूर्णमस्तु एवमस्तु ॥ पित्रे सांव० तिलोदकंसु
स्वधा उदकत० ॥ सव्येन । ततो गोग्रासादि ॥ या काचियोगिनी रौद्रा सौम्या घोरतरा
परा । खेचरी भूचरी रामा तुष्टा भवन्तु मे सदा ॥ आकाशमातृभ्योन्नं नमः आकाश०प
समालभनं गन्धो नमः अर्घो० ॥ सौरभेयाः स्वर्गहिताः पवित्राः पुण्यराशयः। पथि गृह्णन्तु
श्रा० मे ग्रासं गावस्त्रैलोक्यमातरः (गोभ्योन्नं नमः) ऐन्द्रवारुणवायव्या याम्या नैर्ऋतिकाश्च ये ।
वायसाः प्रतिगृह्णन्तु त्विमं पिण्डं मयोद्धृतम् ॥ (काकेभ्योन्नं नमः) श्वानौ द्वौ शावशबलौ
२८ वैवस्वतकुलोद्भवौ । ताभ्यां पिण्डं प्रदास्यामि स्यातामेतावहिंसकौ ॥ (श्वभ्योन्नं नमः)

ऽपसव्येन । रौरवाधीनसत्त्वानां प्रेतद्वारनिवासिनाम्। अर्थिनां याचमानानामक्षय्यमुपतिष्ठतु स-
व्येन । शुनां च पतितानां च श्वपचां पापरोगिणाम् । वायसानां क्रिमीणां च शनकैर्निक्षिपेद्भु-
वि ॥ देवा मनुष्याः पशवो वयांसि सिद्धाः सयक्षोरगदैत्यसङ्घाः । प्रेताः पिशाचास्तरवः सम-
स्ता ये चान्नमिच्छन्ति मया प्रदत्तम् ॥ पिपीलिकाकीटपतङ्गकाद्या बुभुक्षिताः कर्मणि बद्धबद्धाः
प्रयान्तु ते तृप्तिमिदं मयान्नं तेभ्यो विसृष्टं सुखिनो भवन्तु ॥ येषां नमाता न पिता न बन्धुर्नैवान्न-
सिद्धिर्न तथान्यदस्ति । तत्तृप्तयेन्नं भुवि दत्तमेतत्ते यान्तु तृप्तिं मुदिता भवन्तु ॥ भूतानि सर्वाणि
तथान्नमेतदहं च विष्णुर्न ततोन्यदस्ति तस्मादहं भूत निकायभूतमन्नं प्रयच्छामि भवाय तेषाम् ॥
चतुर्दशो भूतगणो य एष तत्र स्थिता ये खलु भूतसङ्घाः । तृप्त्यर्थमन्नं हि मया विसृष्टं तेषामिदं
ते मुदिता भवन्तु ॥ इत्युच्चार्य नरो दद्यादन्नं श्रद्धासमन्वितः । भुवि भूतोपकाराय गृही सर्वाश्र-
यो यतः ॥ अपसव्येन । यमाय धर्मराजाय मृत्यवे चान्तकाय च । वैवस्वताय कालाय सर्वप्राण-
हराय च । औडम्बराय नीलाय दध्नाय परमेष्टिने । वृकोदराय भीमाय चित्रगुप्ताय वै
नमः । पाशहस्तकृतान्ताय प्रेताधिपतये नमः ॥ सव्येन । ये विश्वभाविनो भूता ये
तेष्वनुयायिनः । आहरन्तु बलिं तुष्टाः प्रयच्छन्तु शुभं मम ॥ योस्मिन्निवसति क्षे-
क्षेत्रपालाः सकिङ्कराः । तस्मै निवेदयाम्यद्य बलिं पानीयसंयुतम् ॥ त्वां क्षेत्राधिपतयेन्नं

श्रा० २६

नमः रां राष्टाधिपतयेन्नं नमः सर्वाभयवरप्रदः मयि पुष्टिं पुष्टिपतिर्दधातु ॥ अपसव्येन
आयुः प्रजां धनं विद्यां स्वर्गमोक्षौ सुखानि च । प्रयच्छन्तु तथा राज्यं नृणां प्रेताः पिताम-
हाः ॥ एष पिण्डो मया दत्तस्तव हस्ते जनार्दन । गयायां पितृरूपेण स्वयमेवोपगृह्यताम् ।
आत्मनश्चार्थलाभाय क्षमाय विजयाय च । शत्रूणां बुद्धिनाशाय पितृनुद्धरणाय च । पञ्चक्रो-
शं गयाक्षेत्रं क्रोशमेकं गयाशिला । यत्र तत्र स्मरेन्नित्यं पितृणां दत्तमक्षयम् ॥ सव्येन । गा-
यत्र्यै नमः ३ अद्यतावत् महागणपतेः० आत्मनो० पितुः० सांवत्स० कलशपू० क्षेत्रेश्वरपूज-
नमच्छिद्रं सम्पूर्णमस्तु एवमस्तु ॥ एताभ्यो० यवोदकं ॥ आज्ञां मे दीयतां नाथ नैवेद्यस्या-
स्य भक्षणे । शरीरयात्रासिद्ध्यर्थं भगवन्क्षन्तुमर्हसि ॥ आपन्नोस्मि शरण्योसि सर्वावस्थासु
सर्वदा । भगवंस्त्वां प्रपन्नोस्मि रक्ष मां शरणागतम् ॥ ईशानविष्णुकमलासनकार्तिकेयव-
ह्नित्रयार्करजनीशगणेश्वराणाम् । क्रौञ्चामरेन्द्रकलशोद्भवकश्यपानां पादं नमामि सततं पि-
तृमुक्तिहेतोः ॥ कलिकल्मषविमुक्तैः पूजितः सिद्धसङ्घैरमरचमरमालावीज्यमानोप्सरोभिः
श्रा० पितृशतमपि बन्धून्पुत्रपौत्रान्प्रपौत्रानपि नरकनिमग्नांस्तारयेद्विष्णुरेव ॥ क्षमध्वं मम क्षेत्रे-
शा ददध्वं धनसम्पदः । खभूपातालदिक्संस्थास्तुष्टा यान्तु स्वकं पदम् ॥ आह्वानं नैव जाना-
३० मि नैव जानामि पूजनम् । विसर्जनं न जानामि क्षम्यतां परमेश्वर ॥ उभाभ्यां जानुभ्यां पा-

सिभ्यां शिरसो चोरसा मनसा च वचसा नमस्कारं करोमि नमः ॥ नमो ब्रह्मण इति तर्प-
णम् । अपसव्ये । पात्राणि चालयेच्छ्राद्धे स्वयं शिष्योऽथवा सुतः । न स्त्रियो नच बालाश्च
नान्यजातः कदाचन ॥ सव्येनाचम्य । उदकलशमुपनिधाय स्वस्त्ययनं वाचयति उत्तिष्ठ ब्र-
ह्मणस्पते० ॥ मन्त्रार्थाः सफलाः सन्तु पूर्णाः सन्तु मनोरथाः । शत्रूणां बुद्धिनाशोऽस्तु मि-
त्राणामुदयस्तव ॥ अपसव्येन । मनोन्वा हुवामहे नराशंसेन स्तोमेन पितृणां च मन्मभिः ।
आन एतु मनः पुनः क्रत्वे दक्षाय जीवसे ज्योक्च सूर्यं दृशे । पुनर्नः पितरो मनो ददातु दै-
व्यो जनः जीवं व्रातं सचेमहि । आते अग्न इधीमहि द्युमन्तं देवा जराः युद्धस्याते पनीयसी स-
मिद्दीदयति द्युवि इषंस्तोतृभ्य आभर । यदन्तरिक्षं पृथिवीमुत द्यां यत्पितरं मातरं वा जिहिं-
सिम । अग्निर्नस्तस्मादेनसो गार्हपत्यः प्रमुञ्चतु चकृम यानि दुष्कृता ॥ सव्येन । अनन्तशा-
खकल्पाय भोगमोक्षफलाय च । ब्राह्मणैः सेव्यमानाय वेदवृक्षाय वै नमः ॥ तुष्टेषु तुष्टाः कव-
यो वदन्ति प्रत्यक्षदेवेषु परोक्षदेवाः । यद्ब्राह्मणास्तुष्टतमा वदन्ति तद्देवताः कर्मभिराचरन्ति ॥
अद्य मे सफलं जन्म भवत्पादाभिवन्दनात् । अद्य मे वंशजाः सर्वे गतास्त्वनुग्रहाद्दिवम् ॥ आ०
यत्तु शाकादिदानेन क्लेशिता यं मयेदृशाः । तत्क्लेशजातं चित्ते तु विस्मृत्य क्षन्तुमर्हथ ॥ ब-
हिः प्रदक्षिणं कृत्वा पदान्यष्टावनुव्रजेत् बन्धुवर्गेण सहितः पुत्रभार्यासमन्वितः ॥ इति श्राद्धविधिः ३१

## ॥ अथाग्निसाधनविधिः ॥

घृतालिप्ते कांस्यपात्रे संस्थापितमग्निं कन्याहस्तेनानीय। संव्वः संजामीति संस्कृताद्भिः। गायत्र्यै नमः ३ हिरण्यवर्णाः ४ आपो हिष्ठेति संजीव्य ब्राह्मणो प्रज्वलितं दर्भद्वयं। क्रव्यादमग्निं प्रहिणोमि दूरं यमराज्ञो गच्छत्वग्निप्रवाह्यः। इहैवायमितरो जातवेदा देवेभ्यो हव्यं वहतु प्रजानन् इत्याकृष्य योग्निः क्रव्यात्प्रविवेश वो ग्रहमिदं पश्यन्नितरं जातवेदसम्। तं हरामि पितृयज्ञाय देवं सुघर्मपिन्वाद्वर मे सधस्थे इति त्यक्त्वा। प्राणायामं कृत्वाऽग्निं हस्ताभ्यां गृहीत्वा यो अश्वत्थः शमीगर्भ इत्यादि। अजयो लोकान्प्रदिशश्चतस्र इत्यन्तं चन्द्रसूक्तंपठन्नवसान्यां क्षिपेत्। उर्वश्यासिआयुरसि पुरूरवा असि यत एव प्रथमं जज्ञे। अग्निरेभ्यो योनिभ्यो जनितो जातवेदाः स गायत्र्या त्रैष्टुभा जगत्यानुष्टुभ्यः देवेभ्यो हव्यं वहतु प्रजान । सहाग्नेरग्निना जायस्व सह रय्या सह पुष्ट्या सह प्रजया सह ब्रह्मवर्चसेन अजन्यग्निर्होता पूर्वपूर्वेभ्यः पवमानः पावकः शुचिरीड्यः असुरसि प्रथमजा। असुर्नामासुरेभ्यसे असुरहमसुस्त्वं किमद्यासुरसुङ्करदसोरसुं प्रतीतनमज्ञन्वीध्वम्। भूर्भुवःस्वरङ्गिरसान्त्वां देवानां व्रतेनादधे। आदित्यानां त्वा देवानां व्रतेनादधे। द्यौर्मह्ना भूमिर्भूम्ना तस्यास्ते देव्यदिते। उपस्थे नादमन्नाद्यानुपत्यायादधे। अयं गौ पृश्निरक्रमीदसन्मातरं

पुरः पितरं च प्रयत्सुः । अग्ने गृहपतेऽहिर्बुध्न्य परिपद्य दिवः पृथिव्याः पर्यन्तरिक्षान्विन्द ।
यजमानाय पृथिव्याः मूर्धन्सीद यज्ञिये लोके योनो अग्ने निष्टो यो अनिष्ट्यो अभिदासति इद-
महं तं त्वयाभिदधामि । सुगार्हपत्ये निर्णुदन्नशतीं रुषे श्रीयसीं श्रीयसीं नः दीर्घायुत्वाय शत-
शारदाय अभियस्व महते सौभगाय इति सहिरण्यरत्नजलेन सिञ्चयित्वा यास्ते इत्यरणीकाष्टं दद्यात् या-
स्ते शिवास्तन्वो जातवेदो याअन्तरिक्षे दिवि या पृथिव्यां ताभिः सम्भूय सगणसजोषा हिरण्य-
योने वह हव्यमग्ने । स त्वमग्ने ज्योतिषा भाहि समन्तरिक्षेण सं पार्थिवेन वैश्वानर्या समिधा द-
धिहि नः । ऊर्जस्वत्या भास्वत्या रश्मिवत्या ज्योतिष्मत्या ॥ सप्त ते अग्ने समिधः० । प्रजाप-
तये, स्वाहा सूर्याज्जातेभ्य । अग्न आयाहि वीतये० । अग्निर्दूतं वृणीमहि होतारं विश्ववेदसं । अस्य
यज्ञस्य सुक्रतम् । अग्निमग्निहवीमभिः सदा वहन्तु विश्पतिं, हव्यवाहं पुरुप्रियम् । अग्निदेवो इहा-
वह जज्ञानो वृक्तु बर्हिषि । अस्य होता न इड्यः । ते विश्वतो विबोधय यदग्नियामि दुत्यं देवै-
रासर्पि बर्हिषि । घृता वहन्तु दीदिवा प्रतिष्म रिपतो दह, अग्ने त्वं रक्षस्व नः । अग्नि-
मग्नि समिध्यते कविर्ग्रहपतिर्युवा, हव्यवाहाज्जुह्वस्याः । कविमग्निमुपस्तुहि सत्यं धर्माणमधुरे, दे-
वममीवचातनम् । यस्त्वामग्ने हविष्मतिर्दूतं देवमुपर्षति, तस्य सुप्राविता भव । यो अग्निर्देव वी-
तये हविष्मां अविवासति तस्मै पावक दीदिवो अग्निदेव इहावह, उप प्रियं हविं चनः । अग्ने शु-

क्रेण शोचिषा विश्वेभिर्देव हुतिभिः, इमं स्तोमं जुषस्व नः । चित्तिः स्रुगित्यनुवाकं पठेत् ॥ संमुखस्तिष्ट देव त्वं यथा स्थास्यन्ति देवताः । स्थानभूताः शिवादीनां शक्तीनां सुरपूजिताः । ब्रह्माज्ञयाद्य मे यज्ञं सफली कर्तुमर्हसि । प्रदक्षिणं कृत्वा ॐ हुँ हुतभजे नमः । ततोऽग्रादि स-हिरण्यं सङ्कल्पयेत् । अद्य तावत् पितृणां स्वर्गप्राप्त्यर्थं आत्मनः पुण्यवृद्ध्यर्थं अग्निप्रतिग्रहणार्थ-मिममन्नं सङ्कल्पयामि नमः । ततोऽग्निकर्म । पात्रं तिला० । अग्नये समनमदित्यग्निसाधनम् ॥

※ ॥ अथोद्वाहाष्टकयोर्विधिः ॥ ※

ब्रह्मकलशं संस्थाप्य । प्रदानं । अग्नये नमः, वायवे नमः, सूर्याय नमः, ब्रह्मणे नमः, प्र-जापतये नमः कूष्मार्पिभ्यः नमः १ अग्निना रयिमश्नवत्पोषमिव दिवे दिवे । यशसं वीरमुत्तम-म् ॥ प्रजापते नहि० ॥ २ उदग्ने शुचयस्तव शुक्र भ्राजन्त ईरते । तव ज्योतींष्यर्चय ॥ अग्ने प-वस्व स्वपा० ॥ त्वं नस्तन्तुरुत सेतुरग्ने त्वं पन्था भवसि देवयानः । त्वयाग्ने पृष्टं वयमारुहेमाऽ-था देवैः सदमादं मदेम ॥ अग्ने नय सुपथा राये अस्मान्विश्वानि देव वयुनानि विद्वान् । युयो-

प्रष्ट० ध्यस्मज्जुहुराणमेनो भूयिष्ठान्ते नम उक्तिं विधेम । ३ अष्टकाप्र० । ऋतूनां पत्नी प्रथमेयमागा-दह्नां नेत्री जनित्री प्रजानाम् । एका सती बहुधोषो व्युच्छा जीर्णा त्वं जरय सर्वमन्यत् ॥ ऋ-

३४ तस्य धामा प्रथमा व्युपस्यऽपामेका महिमानं विभर्ति । सूर्यस्यैका चरति निष्कृतानि घर्मस्यै-

का सवितैका नियच्छति ॥ देवा ग्रावाणो घोपमक्रत हविष्कृएवन्त परिवत्सरीयम् । एकाष्टके सुप्रजसः सुवीरा ज्योग्जीवेम बहिहृतो वयन्ते नमः ॥ ४॥ तद्विष्णोः० विष्णुपञ्चायतनदेवता-भ्यो नमः ॥ ऐन्द्राग्नम् ॥ यजमानमानीय ॥ आसनशोधनादि । अ नाभौ० । तीर्थेस्नेयं । यत्रास्ति माता० अद्यतावत् । महागणपतये ० । अग्नये वायवे सूर्याय ब्रह्मणे प्रजापतये कूष्मर्षिभ्यः । अग्नये पुष्टपतये प्रजापतये अग्नये शुचये अग्नये पवमानाय अग्नये तन्तुमते अग्नये पथिकृते अ-ग्नये अष्टकादेवतायै विष्णुपञ्चायतनदेवताभ्यो हिरकादिभ्यो वटुकादिभ्यो दीपधूपः । ॐ गायत्र्यै नमः ३ महागणपतेः । अग्नेः वायोः सूर्यस्य ब्रह्मणः प्रजापतेः कूष्मर्षीणां अग्नेः पु-ष्टिपतेः प्रजापतेः अग्नेः शुचेः अग्नेः पवमानस्य अग्नेः तन्तुमतः अग्नेः पथिकृतः अग्नेः अष्टका-देवतायाः । आत्मनो० पितुर्वा मातुः० कलशपूजनमहं करिष्ये ॥ एवमासनम् ॥ अग्नये० यु-ष्मान्वः पूजयामि ॐ पूजय ॥ अग्निं वायुं सूर्यं ब्रह्माणं प्रजापतिं कूष्मर्षीन् अग्निं पुष्टिपतिं प्रजा पतिं अग्निं शुचिं अग्निं पवमानं अग्निं तन्तुमन्तं अग्निं पथिकृतं अग्निं अष्टकादेवतां विष्णुः०आ-वाहयिष्यामि ॐ आवाहय ॥ अग्ने वायो सूर्य ब्रह्मन् प्रजापते कूष्मर्षयः अग्ने पुष्टिपते प्रजापते अग्ने शुचे अग्ने पवमानस्य अग्ने तन्तुमत् अग्ने पथिकृत् अग्ने अष्टकादेवते इदं वोर्घ्यं नमः ॥ दक्षिणान्तं ॥ अथव्याहृतिवैश्वदेवे ॥ हन्तमनुष्येभ्यः सनकादिभ्योन्नं नमः आचमनीयं नमः

पुनरग्निं परिसमूह्य ६ आर्द्रां पञ्च ॥ अपूपचरुं । अ० वा० सू० ब्र० प्र० कू० जुष्टं निर्वपामि
अक्षतचरुं । अग्नये पुष्टिपतये प्रजापतये २ अपूपचरुं । अग्नये शुचये अ० पवमानाय अ० त-
न्तुमते जु० । अपूपचरुं अ० अष्टकादेवतायै जुष्टं निर्वपामि एवं प्रोक्षामि ॥ आज्यभागान्तं । अ
कूष्माण्डं तद्ब्राह्मणं च हुत्वा ॥ प्र० । ते० । अग्नये स्वाहा । वा० सू० ब्र० प्र० कू० ६ स्रुवे-
णाज्यहोमः । अग्नये जनिविदे स्वाहा । सोमाय ज० । गन्धर्वाय ज० । आयुषः प्राणमित्येका-
दश० । ते० । आकूतमिति त्रयोदश० । ते० । बृहस्पतिपुरोहिता इति ४ स्रुवेण । ऋताषाडि-
ति त्रयोदशाहुतीः । अग्निर्भूतानामित्येकविंशमाधिपत्यानि जुहोति ॥ अग्निर्भूतानामधिपतिः स-
माऽवतु तस्मै स्वहा १ यमः पृथिव्याम० २ वायुरन्तरिक्षस्याधि० ३ सूर्यो दिवोऽधि० ४ च-
न्द्रमा नक्षत्राणाम० ५ विष्णुर्दिशाम० ६ पूषा पथीनाम० ७ त्वष्टा रूपाणाम० ८ सविता
प्रसवानाम० ९ इन्द्रो ज्येष्ठानाम० १० मित्रः सत्यानाम० ११ वरुणो धर्मणाम० १२ रुद्रः
पशूनाम० १३ बृहस्पतिर्ब्रह्मणाम० १४ ब्रह्मणो वाचाम० १५ सोम ओषधीनाम० १६ स-
अष्ट० मुद्रः स्रवन्तीनाम० १७ अन्नं साम्राज्यानाम० १८ गायत्री च्छन्दसाम० सा मावतु तस्यै०
१९ मरुतो गणानामधिपतयस्ते मावन्तु तेभ्यः० २० पितरः पितामहाः परावरेभ्यस्ते माव-
 न्त्वऽस्मिन्ब्रह्मण्यस्मिन्क्षत्रस्यामाशिष्यस्यां पुरोधायामस्यां देवहूत्यां स्वाहा २१ आकूत्यै त्वा

स्वाहा । कामाय स्वा० । समृद्ध्यै स्वा० ॥ हिरण्यगर्भ इत्यष्टाभिः ॥ हिरण्यगर्भः १ यः प्राण-
तो २ य ओजदा ३ येन द्यौ ४ य इमे ५ यस्येमे ६ आपो ह यन्म० ७ आ नः प्रजां० ८ ॐ
भूः स्वाहा । ॐभुवः । ॐस्वः । ॐभूर्भुवः स्वः । अग्न आयूंषि० । अग्निऋषिः पा० । अग्ने
पवस्व० । ततोघृतचरु ॥ अग्निं पुष्टिपतिं प्रजापतिं च यजेत ॥ अग्निनारयिं० । प्रजापते० २
तृतीयचरु ॥ उदग्ने शुचयस्तव० । अग्ने पवस्व० । त्वं नस्तन्तु० । अग्ने नय० । अष्टकाप्रधानं
ऋतूनां पत्नी० । ऋतस्य धामा० । देवा ग्रावाणो० । अष्टकानुवाकौ तूष्णीनामार्षम् ॥ इयमे-
व सा या प्रथमा व्यौच्छत्सा वा स्वन्तश्चरति प्रविष्टा । वधूर्मिमाय नवगज्जनित्री त्रय एनां
महिमानः सचन्ते १ छन्दस्वतीरुपसौ पेपिशाने समानं योनिमनु सञ्चरन्ती । सूर्यपत्नी वि-
चरतः प्रजानती केतुमती अजरे भूरिरेतसः २ ऋतस्य पन्थामनु तिस्र आघुस्त्रयो घर्मासो अ-
नुरेतसागुः । प्रजामेका रक्षत्यूर्जमेका व्रतमेका रक्षति देवयूनाम् ३ चतुष्टोममदधाद्या तुरीया
यज्ञस्य पक्षा ऋषयो भवन्ती । गायत्रीं त्रिष्टुब्जगतीं विराडर्कं युञ्जाना सुरभन्निदम् ४ पञ्च-
भिर्धाता विदधा इदं यत्तासां स्वसॄरजनत्पञ्च पञ्च । तासामयन्ति प्रयवेन पञ्च नानारूपाणि
क्रतवो वसानाः ५ ऋतुतिथिः ॥ नैवेद्यं ॥ इळामग्ने० । अग्ने त्वं पारयानव्यो । इतिच इळा-
भागं ॥ वैश्वानरेणेत्युपस्थानम् ॥ यद्देवा देव हेळनमित्यञ्जलिः । सौत्रामण्या निर्वरुणस्य

अष्ट०

३७

तावत् पुनः वैश्वानरेति तर्पणम् । अनेन मंत्रहोमेन पितुर्वा मातुः अग्निः प्रीयतां० ॥ हुते
क्षणं । ब्रह्मणपूजनम् ॥ दक्षिणान्तं । अपसव्येन । अद्यतावत् पितु र्वा मातुः सां० अष्टकाप्रीत्य
अष्टकादेवताः प्रीयन्तां प्रीताःसन्तु । सव्येन । ॐ गायत्र्यै नमः ३ पूर्ववदच्छिद्रं । आश्रावि
तं० त्र्यायुषं० विमुच्य ३ नयामि पुनरग्निं परिसमूह्य पर्युक्ष्य ६ श्राद्धकाले गयां ध्यात्वा
गायत्र्यै नमः ३ अपसव्येन । देवताभ्यः० ३ पितुर्वा मातुः सांवत्स०ब्रह्मणपूजनमहं करिष्ये
अग्निं परिसमूह्य पर्युक्ष्य परिषिच्य ६ निहन्मीत्यादि । ब्राह्मणपूजनमच्छिद्रमस्तु एवमस्तु ।
विमुंचामि ३ नयामि । सव्येन । परिसमूह्य पर्युक्ष्य परिषिच्य ६ पुरस्तात् । अग्नये स्वाहा
प्र० सू० प्र० विमुञ्चामि नयामि । धर्मं देहीत्यग्नौ पुष्पं क्षिपेत् ॥ अपस० । पित्रे वा तिलो
कं स्वधा० । सव्येन । या काचिदिति इत्युद्वाहाष्टकाविधिः ॥

अथ पृथक्पृथक्पक्षयागचतुष्टयेन उद्वाहविधिः ॥ प्रधानादि पूर्ववत् । आदौ पञ्च० अष्
चरौ अ० वा ० सू० ब्र० प्र० कू० जुष्टं निर्वपामि । एवं प्रोक्षामि । आज्यभागान्तं ॥ कूष्मा
तद्ब्राह्मणं च हुत्वा ॥ ते० प्र० । अ० ६ ऋतुतिथिः ॥ इळामग्ने० । अग्ने त्वं पारयानवो
च इळाभागं दत्वा । वैश्वानरेणेत्युपस्थानं । यद्देवदेवहेळनमित्यञ्जलिः । वैश्वानरेति तर्पणं ।
तमेक्षणं नयामि १ । पुनरग्निं परिसमूह्य६ आदौ पञ्च१६ अक्षतचरौ । अग्नये पुष्टिपतये प्रज

पतये जुष्टं निर्वपामि । आज्यभागान्ते । अग्नये जनिविदे स्वाहा० । आयुषः प्राणमिति । ते० बृहस्पतिपुरोहिता इति ॥ ऋताषाडिति त्रयो० । आकूत्यै० ३ हिरण्यगर्भः ८ ॐभुःस्वाहा४ अग्न आयूंषि० । अग्निर्ऋषि० । अग्ने पवस्व० । प्रधानद्वयं । अग्निर्ना रयिं० १ प्रजापते २ ऋतुतिथिः । नयामि १ ॥ पुनः परिसमूह्य ६ आदौ पञ्च १६ । अपूपचरौ । अग्नये शुचये पवमानाय अग्नये तन्तुमते अग्नये पथिकृते जुष्टं निर्वपामि । एवं प्रोक्षामि । आज्यभागान्ते । प्रधानं । उदग्ने० अग्ने पवस्व० त्वं नरतन्तु० अग्ने नय० ४ ऋतुतिथिः नयामि ३ ॥ परिसमूह्य ६ पुरस्तात् ४ अग्नये स्वहा प्रजा० सू० प्र० विमुच्य । नयामि । पुनः परिसमूह्य ६ । पुरस्तात् ४ अग्नये शुकारूढायेति व्याहृतिवैश्वदेवे सम्पाद्य ॥ हन्तमनुष्येभ्योन्नं नमः । आचमनीयं नमः । अथाष्टका ॥ अग्निं परिसमूह्य ६ आदौ पञ्च १६ अपूपचरौ । अग्नये अष्टकादेवतायै जुष्टं निर्वपामि एवं प्रोक्षामि । आज्यभागान्ते । प्रधानं ऋतूनां पत्नी० । ऋतस्य धामा० देवा ग्रावाणो० ३ । स्रुवेणाज्यहोमः । अष्टकानुवाकौ तूखानामार्षम् । इयमेव० ५ ऋतुतिथिः पूर्णान्तं । अग्नेर्यविष्टपूजनम् । आश्रावितं । नयामि४ अग्निं परिसमूह्य पर्युक्ष्य ६ श्राद्धमारभेत् ॥ इत्युद्वाहाष्टकाविधिः समाप्ताः ॥ अष्ट ३९

## ॥ अथान्त्यकर्म लिख्यते ॥

तत्रादौ निरग्नेर्विधवायाश्च यथा ॥ शालिचूर्णेन ब्रह्मकलशं तद्दक्षिणतोऽस्त्रकलशं वामे गायत्रीकलशं मध्ये भैरवक०। तद्दक्षिणतो भूतपञ्चकं भैरवपट्टं तदधोऽग्निकुण्डं चोल्लिख्य। प्रधानं अस्त्रकलशे। अस्त्रानीलकपर्दिने० वामे गायत्र्यै नमः ३। मध्ये। त्र्यम्बकं०। क्षेत्रस्य पतिना०॥ मधुपर्कं सावित्राणि०। महागणपतये०। दक्षिणे अस्त्राय। वामे गायत्र्यै मध्ये भैरवाय। दक्षिणे महादंष्ट्राय पश्चिमे करालाय। उत्तरे मदोत्कटाय। पूर्वे श्मशानाधिपतये। मध्ये भैरवाय। आग्नेय्यां वटुकादिभ्यस्तुण्डुलमात्रं। हिरण्यगर्भः॥ सर्वं कर्म प्राचीनावीती। तीर्थे स्वयं। अद्यतावत्। महागणपतये धूपदीपः। अद्यतावत् पितः अमुकगोत्र अन्त्यक्रियानिमित्तं एष ते धूपः एष ते दीपः। गायत्र्यै नमः ३ अद्यतावत् महागणपतेः दक्षिणे अस्त्रस्य। वामे गायत्र्याः। मध्ये भैरवस्य महादंष्ट्रस्य करालस्य मदोत्कटस्य श्मशानाधिपतेः भैरवस्य। वटुकादीनां आत्मनो० पितुर्वा मातुः अन्त्यक्रियानिमित्तं तस्य परलोके स्वर्गप्राप्त्यर्थं कलशपू०। दक्षिणेऽस्त्रपू० वामे गायत्रीपू० मध्ये भैरवपू० भैरवपट्टभूतपञ्चकपूजनमर्चामहं करिष्ये ओं कुरुष्व॥ तिलसर्षपयवान्विकीर्य महागणपतेः

इदमासनं नमः ॥ महागणपतये युष्मान्वः पूजयामि ओं पूजय । महागणपतिं० दक्षिणेऽ-
स्त्रं । वामे गायत्रीं मध्ये भैरवं । महादंष्ट्रं करालं मदोत्कटं श्मशानाधिपतिं भैरवं वटुका-
दीन् आवाहयिष्यामि ओं आवाहय ॥ महागणपते दक्षिणेऽस्त्र । वामे गायत्रि । मध्ये भैरव ।
महादंष्ट्र कराल मदोत्कट श्मशानाधिपते भैरव वटुकादयः इदं वोऽर्घ्यं नमः । दक्षिणान्तं ।
अद्यतावत् पितुर्वा मातुरन्त्यक्रियानिमित्तं कलशप्रीत्या तिलाम्भसा पुण्यवृद्धिरस्तु स्वर्गप्राप्ति-
रस्तु परा तृप्तिरस्तु एतास्ते कलशदेवताः प्रीयन्तां प्रीताः सन्तु ॥ एवं दक्षिणेस्त्रक० ।
वामे गायत्रीक० मध्ये भैरवक० भैरवपष्टं भूतपञ्चकं प्रीयतां प्रीतोस्तु । तद्विष्णोः० ॥ श-
वस्नानं । तदनु परोळाशस्य सावित्राणि० महादंष्ट्रादिभ्यो वटुकादिभ्यो नमो नैवेद्यम् ।
क्षेत्रेशबलिः ॥ गायत्र्यै नमः ३ अच्छिद्रं । यवोदकम् ॥ अथ शवस्नानमारभ्य । आदौ मृत्कुश-
शपृष्टे उदङ्मुखं शवं संस्थाप्य । पुंभिः पुंसां । स्त्रीभिः स्त्रीणां शुद्धिं विधाय स्नानपट्टं च
सम्बध्य ॥ मृद्भस्मगोमयेन । आक्रम्य वाजिन् १ प्रसद्य भस्मना २ इह गावः ३ शिर-
सि प्रथमं स्नायात् । ततो गोधूमपिष्टेन । तप्ताम्बुना च शवं निर्मलीकृत्य शिखां विमुच्य । अन्त्य०
शवहस्ते । वसोः पवित्रमसि । पादतो सानन्तं यज्ञोपवीतं । स्त्रियो वामकर्णेनन्तं संस्थाप्य
एकविंशतिस्नानं २१ षोडशस्नानं १६ पञ्चदशस्नानं १५ ततो दक्षिणस्कन्दे अस्त्रानील ।

वामंस्व.न्दे गायत्री । कपाले त्र्यम्बकं दद्यात् ॥ ललाटेऽङ्गरागं चन्दनं सिन्दूरं साग्निकस्य । अग्नितिलकं नाडीवन्धनं । मुक्तैर्धूमफर्नां नवद्वारपिधानं मुखे शम्बलं । पादतले मधु तूलिकात्तपादिकां च प्रक्षिप्य । मुखजूर्जीं प्रति कुंकुमेण " ॐ त्यादचोप्र नः यो योधि हिमदे स्यवदे र्गोभ एयंरवतुवित्सस्तस्वंवर्भुभू ॐ ,, इति विपरीतगायत्रीं । स्त्रीषु । " ॐ यतद्वियं सभांहिया ,, इति संलिख्य । ततः शवं वस्त्रैः सम्बध्य विमानपृष्ठे कुशतिलान्नास्तीर्य शुभवचनैः सह तत्रारोह्य गृहद्वारे अद्यतावत् पितः अन्त्यक्रियानिमित्ते एष ते बोधः पिण्डः प्रेतस्तृप्यतु । अर्धपथे अद्यतावत् पितः मकरध्वजः पिण्डः० श्मशाने यमदूतः पिण्डः० शवं निष्कासयन्तो " यस्य कोष्टजगतः पार्थिवस्यैकाय इद्वशी । यमं भङ्गश्रवो गाय यो राजा न परोद्याः १ यमं गाय भङ्गश्रवो यो राजा न परोद्याः । येनापो नद्यो धन्वानि येन द्यौः पृथिवी दृढा २ हिरण्यकेशान्मधुरान्हिरण्याकाणया शफान् । अश्वावनस्य तं दानं यमो राजाधितिष्ठति ३ इत्यृचः पठेयुर्विप्राः ॥ लोहचूर्णबधिरलाजाश्च

अन्त्य० विकीर्याः । पुष्पस्रद्दलितविमानाभ्यन्तरे अस्त्राभ्युक्षणपूर्वं पुत्रादिना निर्हरेयुः वह्निपुरः सन् यज्ञपात्राणि सर्वमन्यत्सम्भारमग्रे कृत्वा लाजादीन्विकिरन्तो निर्गच्छेयुः ॥ अर्धपथे । मकरध्वजपिंडं । श्मशाने । यमदूतपिंडं दत्वा । शुचौ देशे प्राचीनावीती कर्म कुर्यात् ॥ द्विचतुहा

स्तिकं वास्तुयागमुल्लिख्य । आग्नेय्यां ब्रह्मकलशो प्रधानं । यमो दाधार० । अग्निष्वात्तानृता-
मतो हवामहे नराशंसो सोमपीथं य आनशुः । त आगसन्त त इह श्रवन्तु अधिब्रुवन्तु ते
ऽवन्त्वस्मान् ॥ अन्त्येष्टौ नवश्राद्धेषु कलशं तत्र वर्जयेदिति लौगाक्षिः ॥ तीर्थे स्नेयं ।
धूपदीपौ यमाय अग्निष्वात्तादिभ्यः पितृभ्यः समालभनं गन्धो नमः । दक्षिणान्तं । अक्षयं ॥
पात्रं तिला० परिषिच्य ९ परिस्तीर्य १६ उत्तरतः दक्षिणतश्चरुंस्थापयेत् । सावित्राणि० अ-
पूपचरुं यमाय । यवचरुं अग्निष्वात्तादिभ्यः पितृभ्यो जुष्टं निर्वपामि आज्यभागान्तं । पञ्च-
कृत्वोऽभिघार्य । त्रिकद्रुकेभिरिति यमं यजेत् । स्वहास्थाने स्वधा पठेत् । त्रिकद्रुकेभिः पतति
षडुर्वी रेकमिद्बृहत् । गायत्री त्रिष्टुप्छन्दांसि सर्वता यम आहिताः स्वधा । १ अग्निष्वात्ता नृ-
तामतो० स्वधा २ इति प्रधानद्वयं पितृतीर्थेन जुहुयात् ॥ ऋतुतिथिः । परितो दूळ इत्यन्तं ।
तताश्चिचावास्तुपूजनम् । अश्विनोः ० । गायत्र्यै नमः ३ अद्यतावत् । ईशाने गगनयुतस्य । ई-
शानस्य । अग्नेय्यो सुकेतुयुतस्य रुद्रस्य । नैर्ऋते सजलयुतस्य विष्णोः । वायवे वायुयुतस्य
ईश्वरस्य । मध्ये पृथिवीयुतस्य ब्रह्मणः इन्द्रस्य यमस्य अपांपतेः सोमस्य पृथिवीयुतस्य चर- अन्त्य
क्याः विधार्याः पूतनायाः पापराक्षस्याः स्कन्दस्य अर्यम्णः जम्भकस्य पिलपिञ्जस्य चित्तावा-
सदेवतानां आत्मनो० पितुर्वा मातुः अन्त्यकर्मनिमित्तं चित्तावासपूजनमर्चामहं करिष्ये ॐ ४३

कुरुष्व । एवमासनम् । ईशाने गगनयुताय इशानाय । सुकेतुयुताय रुद्राय । सजलयुता
विष्णवे । वायुयुताय ईश्वराय । पृथिवीयुताय ब्रह्मणे । इन्द्राय यमाय अपांपतये सोमाय. चरक
विधार्यै पूतनायै, पापराक्षस्यै स्कन्दाय अर्यम्णे जम्बकाय पिलपिञ्छाय चित्तावासदेवताभ्य
युष्मान्वः । गगनयुतं ईशानं । सुकेतुयुतं रुद्रं । सजलयुतं विष्णुं वायुयुतं ईश्वरं पृथिवीयुतं ब्र
ह्माणं इन्द्रं यमं अपांपतिं सोमं चरकीं विधारीं पूतनां पापराक्षसीं स्कन्दं अर्यमाणं जम्बु
पिलिपिञ्छं चित्तावास्तुदेवता आवाहयिष्यामि ।। पाद्यं नमः गगनयुत ईशान सुकेतुयु
रुद्र सजलयुत विष्णो वायुयुत ईश्वर पृथिवीयुत ब्रह्मन् इन्द्र यम अपांपते सोम चरकि वि
धारि पूतने पापराक्षसि स्कन्द अर्यमन् जम्बक पिलिपिञ्छ चित्तावास्तुदेवता इदं वोर्घ्यं न
मः ।। दक्षिणान्तं ततो यमाय अग्निष्वात्तादिभ्यः पितृभ्यो नैवेद्यं । इळामग्ने० । पूर्णा तावत
क्षेत्रेशव ः ततः श्मशानदेवताभ्यो बलिं हरेत् । नमः क्रव्यादमुखेभ्यो भूतेभ्यः इति सर्वदा

येऽस्मिन् श्मशाने देवाः स्युर्भगवन्तः सनातनाः । तस्मत्सकाशाद्गृह्णन्तु बलिमष्टाङ्गसंयुतम्
प्रेतस्यास्य शुभांल्लोकान्प्रयच्छन्त्वपि शाश्वतान् । अस्माकमायुरारोग्यं सुखं च ददतां वरम्
अन्नं मांसं पयो मत्स्या दध्याज्यं कृसरं मधु । इत्यष्टाङ्गं बलिं प्राहुः क्रव्यादेभ्यश्चित्तार्चने

इति श्मशानदेवताभ्यो बलिं हरेत् ।। ततस्तिलाक्षतलाजादिना चित्तां पूरयित्वा । उत्तानं

वशरीरं दक्षिणाशिरस्कमारोपयेत् । ततो यज्ञपात्राणि क्षिपेत् । जुहूं दध्ना पूर्णामाज्येन च दक्षिणहस्ते । आस्ये चरुशेषं । स्रुवं नासिकायां । उपयामं शिरसि । दृशदुपलौ वृषणदेशे शिष्टानि शूर्पादीनि यज्ञपात्राणि ऊर्वन्तराले क्षिपेत् । साग्निकानां स्त्रीणां च सर्वाणि यज्ञपात्राणि एकत्रक्षिपेत् ॥ ततः कृष्णाजिनेन प्रच्छाद्य । आकूत्यै त्वा स्वाहेति ईशाने । कामाय त्वा स्वाहेति वायवे । समृध्यै त्वा स्वाहेति नैर्ऋते । त्रिः प्रदक्षिणं दत्त्वोल्मुकं स्थापयेत् प्राकृताग्निमाग्नेयकोणे प्रक्षिप्य ॥ आश्रावितमिति । अस्मत्त्वमभिजातोसि त्वदहं जायते पुनः असौ स्वर्गाय लोकाय स्वाहेति मंत्रेण च पूर्णां दत्त्वा । असौस्थाने मृतस्य नाम ग्राह्यं ॥ स्त्रीणामसत्त्वं । न पठेत । अस्त्रानीलत्युदकधारां क्षिपंस्त्रिः प्रक्रम्य शिरस्तलास्थिते परशौ वाटिकां संस्फोटयेत् ॥ नमो महिम्न इत्युपस्थानं । नमो महिम्न उत चक्षुषे महतां पित उरु वह्नेणीमः । हुतो याहि पथिभिर्देवयानैरोषधीषु प्रतिष्टा शरीरैः ॥ ततश्चित्तावास्तुपृच्छां सम्पादयेत् । गायत्र्यै नमः ३ अद्यतावत् । ईशाने गगनयुतस्ये० पितुर्वा मात [illegible] न्त्यक्रियानिमित्ते चित्तावास्तुपूजनं क्षेत्रेशपूजनमच्छिद्रं सम्पूर्णमस्तु ॥ ततस्तिलोदकं । अद्यतावत् । पितः अन्त्यक्रियानिमित्तं एतत्ते तिलोदकमेतत्ते उदकतर्पणम् ॥ अन्त्यजानां किञ्चिद्दद्यात् । अस्थिसञ्चयं कुर्यात् । शम्यामाङ्गुष्ठप्रमाणेनाऽङ्गुष्ठमात्रं पुरुषमानीय । तीर्थे सचेलं स्नात्वाऽग्निं प्रज्वाल्य सर्वैः त्रिः

भक्रमन् "इन्द्रः सुनीत्या सहसा पुनातु सोमः स्वस्त्या वरुणः समीच्या । यमो राजा प्रमृणा-
भिः पुनातु जातवेदा ऊर्जयन्त्या पुनातु ,, इति पठेत् ॥ ततः क्रियाकर्माचरेत् इति निरग्ने विधिः ।
अथ साग्निकस्य विशेषान्प्रकटीकरोति । शुक्लपक्षे यागं कुर्वतो यथा ॥ कलशपूजामनु ।
अग्निकर्म यथा । पात्रं तिला० । परिसमूह्य ६ पुरस्तात् ४ इदं हविः० । सूर्याय स्वाहा । प्र-
जापतये स्वाहा । विमुच्य । नयामि । पुनः परिसमूह्य पर्युक्ष्य ६ भगवन्सन्निदत्तु ॥ शब्रम्ना-
नं ॥ इतिशुक्लपक्षे ॥ कृष्णपक्षेऽमायागो विशेषोयथा । प्रधानं । भुवो यज्ञस्य । उभा वामि-
न्द्राग्नी । ये के च ज्मा । पात्रं तिला० । परिसमूह्य ६ पुरस्तात् ४ सू० प्र० विमुच्य । परिस-
मूह्य ६ आदौ पञ्च० । अग्नये इन्द्राग्नीभ्यां जुष्टं निर्वपामि । आज्यभागान्तं । प्र० । भुवो य-
ज्ञस्य । उभा वामि । ये के च ज्मा । ऋतुतिथिः । विमुच्य । परिसमूह्य ६ पुरस्तात् ४ मृतादि-
नपृष्ठे मृतदिनं तावत् अ० प्र० सू० प्र० इति ..रणानि दद्यात् । विमुच्य । नयामि । परिसमू-
ह्य पर्युक्ष्य ६ भगवन्पुण्डरीकाक्ष० भगवन्सान्निधत्सु ॥ इति कृष्णपक्षे ॥
स्यन्त्य० यागमकुर्वत उभयोः पक्षयोरग्निसाधनं विशेषोयथा ॥ प्र० । अग्ने नमः ६ अग्निना
रयिं । प्रजापते न हि । उदग्ने । अग्ने पवस्व । तन्नस्तन्तु । अग्ने नय ॥ पात्रं तिला । अ-
४६ ग्नये ६ अग्नये पुष्टपतये प्रजापतये । अग्नये शुचये अग्नये पवमानाय अग्नये तत्त्वमते

अग्नये पथिकृते जुष्टं निर्वपामि । कूष्माण्डं हुत्वा प्र० । अग्नये ६ अग्नये जनविधे । प्र० अग्निं पुष्टपतिं प्रजापतिं च यजेत । ऋतुतिथिः । वैश्वानरेणेत्युपस्थानं । कूष्माण्डाञ्जलिः । वैश्वानरेण तर्पणम् । हुतमेक्षणं । विमुच्य । नयामि । पुनः परिसमूह्य । पर्युक्ष्य २ भगवन्पुण्डरीकाक्ष ॥ इति शुक्लपक्षे ॥

कृष्णपक्षे तु उद्वाहयागत्रयंकृत्वाऽमायागो विधेयः ॥ यथा पात्रं तिला० । अग्नये ६ अग्नये पुष्टपतये प्र० । अ० शु० अ० प० अ० त० । अ० प० जुष्टं निर्वपामि । वैश्वानरेण तर्पणं । हुतमेक्षणं । विमुच्य । पुनः परिसमूह्य ६ पुरस्तात् ४ अ० प्र० सू० प्र० । विमुच्य । पुनः परिसमूह्य ६ आदौ पञ्च० अग्नये इन्द्राग्नीभ्यां जुष्टं निर्वपामि । पर्वतन्त्रं विमुच्य । पुनः परिसमूह्य ६ पुरस्तात् ४ मृतदिनपृष्टे मृतादिनं तावद्धारणं दद्यात् । विमुच्य । परिसमूह्य पर्युक्ष्य ६ ॥ इति कृष्णपक्षे ॥

शुक्लप्रतिपदि यागमकृत्वा मृतस्यामायागं कार्यं यथा । पात्रं तिला० । अग्नये इन्द्राग्नीभ्यां जुष्टं निर्वपामि । पर्वतन्त्रं समाप्य । पुनः परिसमूह्य ६ पुरस्तात् धारणचतुष्टयं अ० प्र० सू० प्र० । विमुच्य । परिसमूह्य पर्युक्ष्य ६ भगवन्सन्निधत्स्व ॥ इति शुक्लप्रतिपदि ॥ अन्त्य०

अथ कृष्णे पूर्णिमायागं यथा । पात्रं तिला० । अग्नये अग्नीषोमाभ्यां जुष्टं नि० ॥ ४७

प्र० । मुंचो यज्ञस्य । आन्यन्देवो । युवमेतानि । प्रतद्विष्णुः । ऋतुतिथिः । विमुच्य ।
नयामि । पुनः परिसमूह्य ६ पुरस्तात् ४ मृतदिनपृष्टे मृतदिनं तावद्धारणं । विमुच्य ।
पर्युक्ष्य ३ ॥ इति कृष्णप्रतिपदि ॥ शुक्लप्रतिपदि यागं कृत्वा मृतस्य शुक्लपक्षविधिः ।
यथा पात्रं तिला० । पुरस्तात् सू० प्र० नयामि । पर्युक्ष्य ॥ ३ ॥ कृष्णप्रतिपदि ॥
कृष्णपक्षविधिः । यथा । पात्रं तिला० पुरस्तात् ४ सू० प्र० नयामि । पुनः परिसमू-
ह्य ६ अग्नये इन्द्राग्नीभ्यां जुष्टं निर्वपामि । पर्वतन्त्रं समाप्य । मृतदिनपृष्टे मृतदिनं
यावद्धारणम् ॥ इति कृष्णप्रतिपदि ॥

प्रतिपदि कृष्णविधि-

'पूंदि' अस्यां तिथौ यागं कृत्वा पूर्णिमायां मृतस्य शुक्लविधिः । प्रतिपदि कृष्णविधि-
विधेयः । अकृत्वा तु पूर्णिमायागं मृतस्य तद्यागं कृत्वा तत्तत्पक्षविधिर्विधेयः ॥
'पूंशे पूंप्र' अस्यां तिथौ, मृतस्य शुक्लविधिः कार्यः ॥ प्रतिपदि शुक्ल-
"अंदि" अस्यां तिथावपि यागं कृत्वाऽमायां मृतस्य कृष्णविधिः ॥ प्रतिपदि शुक्ल-
अन्त्य० विधिः । अकृत्वा त्वऽमायागं मृतस्य तद्यागं कृत्वा तत्तत्पक्षविधिः कर्तव्यः ॥
॥ इत्यन्त्यकर्मविधिः ॥

॥ अथोदकक्रियाविधिः ॥

अपसव्येन । अपन अधाविरत्यस्य कौत्स ऋषिः गायत्रं छन्दः अग्निर्देवता, शुचये विनि-
योगः ॥ अपनः शोशुचदघमग्ने शुशुग्ध्या रयिम् । अपनः शोशुचदघम् ॥ १ ॥ सुक्षेत्रिया सु-
गातुया वसूया च यजामहे । अपनः० ॥ २ ॥ प्रयद्भन्दिष्ट एषां प्रास्माकासश्च सूरयः । अप-
नः० ॥ ३ ॥ प्रयत्ते अग्ने सूरयो जायेमहि प्रते वयम् । अपनः० ॥ ४ ॥ प्रयदग्नेः सहस्वतो वि-
श्वतो यान्ति भानवः । अपनः० ॥ ५ ॥ त्वं हि विश्वतोमुख विश्वतः परिभूरसि । अपनः०
॥ ६ ॥ त्विषो नो विश्वतोमुखातिनावेव पारशयः । अपनः० ॥ ७ ॥ स नः सिन्धुमिव नवा-
ति पर्षा स्वस्तये । अप० ॥ ८ ॥ अद्यतावत् पितरमुकामुकगोत्र प्रथमेऽहनि । द्वितीयेऽहनि ।
तृतीये, चतुर्थे, पञ्चमे, षष्टे, सप्तमे, अष्टमे, नवमे, वा दशमेहनि एतत्ते तिलोदकम् ॥
सव्येन ॥ तीर्थे स्नेयं० । वसोः पवित्र० । आशीर्वादं परमात्मने । स्वप्रकाशो । वनस्पति ।
नमो धर्म । गङ्गाभगवत्यै समालभनं गन्धादि ॥ अपस० । अद्य तावत् पितरमुकामुकगोत्र
प्रथमेहनि वा एष ते धूपः एष ते दीपः ॥ ततो दक्षिणाभिमुखः शिलापृष्टे दारुपृष्टे वा गौर-
मृत्तिकोपरि दक्षिणाग्रान्दर्भानास्तीर्य । पितरमुक० प्रथमेहनि एतत्तेऽवनेजनम् । प्रेतचरोरन्न-

तिलसर्पिर्मधुक्षीरसञ्चितं तत्समेव हि ॥ वामजानुं भूमौ निधाय

मुद्धृत्य । तिलास्तोयं । तिलसर्पिर्मधुक्षीरसञ्चितं तत्समेव हि ॥ अप उपस्पृश्य ॥ एतत्ते अवाकाशः । एत
अद्य तावत् । पितरमु० प्रथमेहनि एष ते पिण्डः । अप उपस्पृश्य ॥ एतत्ते अवकाशः । एत
त्ते वीरान्नं पिण्डलेपं निवारयेत् । पितः प्रथ० एष ते गन्धः । पितः एष तेऽर्घः । एत
पुष्पं । पि० एष ते धूपः । एष ते दीपः एष ते भक्ष्यभोज्यबलिः । पि० एतत्ते तिलमधुमि
अमुदकपात्रं एतत्ते आचमनीयं । एतत्ते हिमपानं । एतत्ते क्षीरपानं । एतत्ते मधुपानं । एत
तिलोदकं । एतत्ते उदकतर्पणं ॥ तद्विष्णोः ॥ ताम्रपात्रान्तर एकपिण्डं वामाङ्गुष्ठे एक
भविष्टरं च संस्थाप्य । अद्य तावत् पितुः प्रथमेहनि वा दशमेहनि सुशुद्धप्रकृतिसाधना
गङ्गाप्रवाहेऽयं पिण्डोस्तु पूरकः । पितः प्रथमे० प्रथमास्तिलोदकुम्भः । पितः प्रथमेऽह
प्रथमा तिलोदकाञ्जलिः एवं प्रेतनाम्ना दिनवृद्ध्या तिलोदकुम्भतिलोदकाञ्जलयो द्विती
द्विः तृतीये त्रिः दशमे दश देयाः ॥ ततः प्रेतकुम्भस्य सोदकस्य विष्टरं क्षिपेत् ।
क्रि० शानानलदग्धोसि परित्यक्तोसि बान्धवैः । इदं क्षीरमिदं नीरं प्रथमेऽहनि प्रेतात्र
अपः पिब । यमदूतात्र स्नाहि अपः पिब । प्रेत क्षीरं पिब । यमदूत क्षी० प्रेत मधु
५.० यमदू० । प्रेत तिलान्भुङ्क्ष्व । यमदू० । प्रेतान्नमद्धि । यम० । प्रेत सर्पिर्भुङ्क्ष्व । यम०
प्रेत गुडशर्करफलमूलद्राक्षादि भुङ्क्ष्व । यम० । तत्पृष्टे भाण्डमादाय । प्रेतयमदूतौ ए

गन्धः । एष वामर्घः । एतद्वां पुष्पं । एष वां धूपः । एष वां दीपः । एतद्वां वासः । एतद्वां माल्यं । एतद्वां दण्डं । अद्य तावत् । पितु प्रथमेहनि वा दशमेऽहनि एषः प्रेतकुम्भोऽहोरात्रतृप्तयेऽस्तु । तत आरात्रिकां । सव्येन । मत्यग्ने हरसः । अपस० प्रेतकुम्भं गृहीत्वा गृहं गच्छेत् 'द्वारदक्षिणशाखोपरि प्रेतकुम्भं संस्थाप्य, वामपादेनाश्मानं बहिः क्षिप्त्वा दक्षिणपादेनान्तः शस्त्रं गृहीत्वा गृहं प्रविशेत् । गृहमध्ये सोदकुम्भं संस्थाप्य । सव्येन ( तीर्थे स्नेयं । धूपदीपः । अपसव्येन । पितः प्रथमेहनि सोदकुम्भ एष ते धूपः एष ते दीपः । जलकुम्भमध्ये विष्टरं क्षिप्त्वा । कुम्भोऽवनिष्टो जनिता शचीभि र्यस्मिन्नग्रे योन्यां गर्भो अन्तः । प्लाशिर्व्यक्तः शतधार उत्सो दुहेन कुम्भी स्वधा पितृभ्यः इति तिलोदकक्षपनमन्त्रः पितः प्रथमेहनि सोदकुम्भ एष ते गन्धः । एवं पितः प्र० एष तेऽर्घः एतत्ते पुष्पं एष ते धूपः एष ते दी एतत्ते वासः । एतत्ते माल्यं ततस्तिलोदकक्षीरमध्वादि एकस्मिन्पात्रे संयूय । अद्य तावत् । पितुः प्रथमे० अयं सोदकुम्भ अहोरात्रतृप्तयेस्त्वित्युक्त्वा क्षिपेत् सव्येनाग्निं प्रज्वाल्य । रक्षोघ्नमन्त्रमैन्द्राग्नं पठेत् अनेन मन्त्रहोमेण दुष्टारिष्टभयभङ्गनिवारणार्थं रक्षोघ्नमन्त्रः प्रीयतां ॥ दशमेहनि सोदकुम्भस्य पुष्पाणि क्षिपेत् ॥ नमः पितृभ्यः प्रेतेभ्यो यमाय जातवेदसे । षट्त्रिंशत्तत्त्वमातीताय प्रेत गच्छ शिवालयम् । मयि मदन्वये वापि देहि

विमलां श्रियम्) दशाह्निकं तु रात्रौ तु सोदकुम्भं
लाभं विशेषतः आयुरारोग्यमैश्वर्यं देहि मे विमलां श्रियम्) दशमेहनि पितरं ध्यात्वा पिण्डोपरि पुष्पाणि क्षिपेत्
विनिक्षिपेत् इति सोदकुम्भविसर्जनमन्त्रः दशमेहनि पितरं ध्यात्वा । राजा मे प्राणो अमृतं सम्राट्चक्षुर्विराट्
शिरो मे श्रीर्यशो मुखं त्विषि केशाश्च श्मश्रुणि । राजा मे प्राणो अमृतं सम्राट्चक्षुर्विराट्
श्रोत्रम् । जिह्वा मे भद्रं वाङ्महो मनो मन्युः सुराड्भसः । मोदाः प्रमोदा अङ्गुलीरङ्गानि
मित्रं मे महः । बाहू मे बलमिन्द्रियं हस्तौ मे कर्म वीर्यं च । आत्मा क्षत्रमुरो मम । पृष्ठौ
मे राष्ट्रमदस्सु । मांस ग्रीवाश्च श्रोणी ऊरू अरत्नी जानुनी । विश्वो मेङ्गानि सर्वशः । नाभिर्मे
चित्तं विज्ञानं पायुर्मेऽपचितिर्भसः ॥ आनन्दानन्दा अण्डौ मे भगः सौभाग्यं भसः । जङ्घा-
भ्यां पद्भ्यां धर्मोऽस्मि विश्वराजा प्रतिष्ठितः)॥ वपनमन्त्रः । आत्मनः शुद्धिकामस्तु पितुर्वैकुण्ठ-
हेतवे । वपनं कारयिष्यामि तीरेऽहं तव जाह्नवि ॥ यानि कानि च पापानि ब्रह्महत्यादिका-
नि च । केशानाश्रित्य तिष्ठन्ति तस्मात्केशान्वपाम्यहम् ॥ वपनं कृत्वा च जलान्तर्विष्टरयु-
तवामस्कन्देन प्रेतकुम्भं गृहीत्वा । इदं पुरुषशार्दूल विमलं दिव्यमुत्तमम् । प्रेतलोकेषु पा-
क्रि० नीयं मदत्तमुपतिष्ठतु ॥ इति पुंविषये ॥ इदं स्वदिति कल्याणि विमलं दिव्यमुत्तमम् । प्रेत-
लोकेषु पानीयं मदत्तमुपतिष्ठतु ॥ इति स्त्री ॥ इति दशाह्निकोदकक्रियाविधिः ॥

## ॥ अथ नवश्राद्धविधिः ॥

नवश्राद्धं दशाहानि नवमित्थं तु षड्तून् । अत ऊर्ध्वं पुराणं स्यात्त्रिविधं श्राद्धमुच्यते ॥ चतुर्थे पञ्चमे चैव नवमैकादशे तथा । यदत्र दीयते जन्तोस्तन्नवश्राद्धमुच्यते ॥ अनूदकमधूपं च गन्धमाल्यविवर्जितम् । नवश्राद्धममन्त्रं च पिण्डोदकविवर्जितम् ॥ अनूदकमित्यवनेजनस्य निषेधः नार्घ्यस्य धूपगन्धमाल्यानामपि पिण्डविषयमिति । पिण्डपरिषेकस्याप्यऽभावः । नवश्राद्धेषुमन्त्रानिषेधादेष्टकाहोसोऽपि निवर्त्तत एव ॥ अथनवश्राद्धविधिः ॥ तीर्थे स्नेयं । धूपदीपौ ॥ अपसव्येन । अद्य तावत् पितः चतुर्थेहनि प्रथमे नवश्राद्धे पञ्चमेहनि द्वितीये नवश्राद्धे नवमेहनि तृतीये नवश्राद्धे एकादशेहनि चतुर्थे नवश्राद्धे एष ते धूपः एष ते दीपः ॥ अश्विनोरिति एककाण्डविष्टरस्य जीवादानं । ततः श्राद्धं । जितं ते पुण्डरीकाक्ष० ३ अद्य तावत् पितुरमुकामुकगोत्रस्य चतुर्थेहनि प्रथमं नवश्राद्धं पञ्चमेहनि द्वितीयं नवश्राद्धं नवमेहनि तृतीयं नवश्राद्धं एकादशेहनि चतुर्थं नवश्राद्धं पाथेयं पथि श्रमनिवारणार्थं ब्राह्मणपूजनमर्चामहं करिष्ये ॐ कुरुष्व ॥ तिलान्विकीर्य । पितः एतत्ते आसनं पितः एतत्ते ब्रह्मणं त्वां भोजयामि ॐ भोजय । नावाहनं तिलान्विकीर्य । पाद्यार्थमुदकं नमः लाजाश्च । भगवन्पाद्यं

आपः क्षीरं पितः इदं तेऽर्घ्यम् पितः चतुर्थेहनि एष
पितः एतत्ते पाद्यं । अर्घ्यार्थमुदकं नमः । आपः क्षीरं पितः इदं तेऽर्घ्यम् पितः चतुर्थेहनि एष
ते गन्धः एष तेर्घः एतत्ते पुष्पं एष ते धूपः एष ते दीपः एतत्ते वासः एष तेऽर्घ्यदानाद्यर्चन-
विधिः सर्वः परिपूर्णोऽस्तु ॥ आमान्ने इदं पित्रे शृतमभिघार्य मेक्षणं न भवति । प्रणवं मन-
सा ध्यात्वा० ॐ ॐ क्षीरं घृतमासिच्य ॥ पितः एतत्तेऽन्नं इदं मधु विष्णो इदं रक्षस्व पितः
यथोपस्थितं दत्तं दास्यमानेन सह सव्यञ्जनममृतमन्नमेतत्तेऽमृतमन्नं ॥ अद्य दिने पितः ए-
तत्तेऽपोशानं । अपहता असुरा रक्षांसि पिशाचाः प्राश्नातु भवान् अमृतं जुषस्व अमृतं भु-
ङ्क्ष्व ॥ दक्षिणाग्रान्दर्भानास्तीर्य । अवनेजनस्य निषेधः तिलसर्पिर्मधुक्षीरसंश्चितं तप्तमेव
हि । तिलास्तोयं० जितं ते पुण्डरीकाक्ष० ३ अद्य तावत् पितः एष ते पिण्डः अप उपस्पृश्य
पितः एतत्ते ऊर्णावासः एतत्ते वीरान्नं गन्धमाल्यं विवर्जयेत् एष तेऽर्घः एष ते धूपः एष ते
दीपः एतत्ते भक्ष्यभोज्यफलनैवेद्यमन्नं । पितः एतत्ते तिलमधुमिश्रमुदकपात्रमाचमनीयं ।
पितः एतत्ते हिमपानं क्षीरपानं मधुपानं तिलोदकं उदकतर्पणं हिमं हिमं रजतं रजतं ॥
नव० स्वदितमिति तृप्तिप्रश्नः । स्वदितं सुस्वादितं तृप्यतु भवान् तृप्तोऽस्मि प्रेतस्तृप्यतु ॥ पितः एतत्ते
आचमनीयं पितः एतत्ते दक्षिणायै तिलहिरण्यरजतनिष्क्रयं ददामि प्रतिगृह्णामि ॥ पित-
५४ रममुकामुकगोत्रं चतुर्थेहनि प्रथमे नवश्राद्धे एतद्दत्तमन्नमक्षय्यमुपतिष्ठतामिदमन्नमक्षय्यमुपति-

के बाहर

स्तु। नाशिषं वृणीयात् ।। जितं ते पु० ३ अद्य तावत् पितुः चतुर्थेहनि प्रथमं नवश्राद्धं पाथेयं प्र-
र्थश्रमनिवारणार्थं ब्राह्मणपूजनमच्छिद्रं सम्पूर्णमस्तु। पितः एतत्ते तिलोदकमेतत्ते उदकतर्प-
णम् ।। प्रत्यग्ने इत्यारात्रिका। अनन्तशाखेति पुष्पम् ।। इति नवश्राद्धम् ।। अथास्थिसंचयं ।।
काचित्तो देहेदेहं दम्पत्योर्मरणे समम्। एकपाकं प्रकुर्वीत पिण्डं दद्यात्पृथक्पृथक् ।। ततश्चतुर्थे-
दिवसे ह्यस्थिसंचयनं चरेत्। सव्येन। ॐ ह्रीं ह्रूं ह्रां फट् स्वाहा इति सप्तवारं श्मशानदिग्बन्धनं
मः शिरसि स्वात्मनाशिखाग्रन्थिं कृत्वास्थि ग्राह्या तत्र गौरमृत्तिकान्ताशिलामारोप्य क्षेत्रेश-
वकं संस्थाप्य क्षेत्रस्य पतिना ।। तीर्थे स्नेयं। धूपदीपौ परिकल्प्य। अपसव्येन पितरमुकामुकगो-
चतुर्थेहनि अस्थिसञ्चयनिमित्ते एष ते धूपः। एष ते दीपः। सव्येन। शिलाजीवादानं। यमदू-
यं वि० कालरात्रीशाय धी० तन्नो यमः प्रचोदयात् ३ अद्य तावत्। शङ्करस्य भवस्य शर्वस्य
द्रस्य पशुपतेः उमापतेः स्कन्दस्य भयावहस्य भैरवस्य। अथवा। कालरूपस्य कालंजनस्य रौ-
रूपस्य स्थितिसंहारकस्य वीरभद्रस्य कामरूपस्य भयङ्करस्य सर्वप्राणहरस्य हाटकेश्वरस्य।
त्मनो० पितुस्तस्य पुण्यवृद्ध्यर्थं चतुर्थदिवसे अस्थिसंचयविधिनिमित्तं शिलापूजनं क्षेत्रेश्वर- अ०
नमर्चामहं करिष्ये। दक्षिणान्तं। या काचिद्योगिनी। पुरोळाशनवकं क्षेत्रेशानां क्षिपेत्। पृ-
र्णां विसर्ज्य। ततः क्षमा। ॐ नमः क्रव्यादमुखेभ्यः ॐ नमः पितृभ्यः प्रेतेभ्यो यमाय च ।। ५५

।। इत्यास्थिसञ्चयम ।।

॥ अथ लवणश्राद्धम् ॥ तीर्थं स्वं । धूपदीपौ । अपसव्येन । अद्य तावत् । पितरमुकामुकगोत्र
चतुर्थदिवसे लवणश्राद्धनिमित्तमेष ते धूपः एष ते दीपः । तिलमधुपयोभिर्लवणमभ्युदयन
अम्भस्थाम्भो वो भक्षीय महस्थ महो वो भक्षीय । ऊर्जस्थोर्जं वो भक्षीय रायस्पोषाः स्थ राय
स्पोषं वो भक्षीय रेवतीरं मधुमस्मिन्योना अस्मिन्गोष्ठे यं वो बन्धुरितो मापगात ममाहासिष्ट व
ह्वीर्मे भवत संहितासि विश्वरूपा गौरा सोर्जा विशा गोपत्येन प्रजया रायस्पोषेण मयवो रायः
श्र यन्तां सहस्रपोषं वः पुषेयम् ॥ सम्पश्यामि प्रजा अहं मिळप्रजसोमानवीत्याहीर्भवन्तु नो गृ
उपत्वाग्नेर्दिवे दिवे वर्धमानं स्वेदंति । मन्त्रं पठित्वा । जितं ते पु० ३ अद्य तावत् पितुरमुकामुक
गोत्रस्य परलोके पुण्यवृद्ध्यर्थं चतुर्थेहनि लवणश्राद्धनिमित्तमिदं गोभ्यो लवणं परिकल्पया
नमः । नन्दायै सुनन्दायै सुभगायै सुशीलायै सुरभये वरकामधेनवे समालभनं गन्धो नमः
अर्घो नमः पुष्पं नमः धूपो, दीपो, वासो नमः । भक्ष्यभोज्य० नन्दादीनामर्घ्यदानाद्यर्चना
धिः सर्वः परिपूर्णोस्तु । अन्नं नमः । अपोशानं दक्षिणाः पितरमुकामुकगोत्र तिलमधुमिश्रमन्न
लव० हिमपानं हिमं २ । सव्येन । वसन्ताय नमः । ततो ब्राह्मणपूजनं आसनं अक्षय्योदकं तावत्
च्छां विसर्ज्य तिलोदकं । लवणगोलानां पुष्पं । न गोषु तुल्यं धनमस्ति किञ्चिद्दुह्यन्ति वा
५८ न्ति हरन्ति पापम् । तृणानि भुक्त्वा त्वमृतं स्रवन्ति विप्रेषु दत्तं कुलमुद्धरन्ति ॥ इति लवणश्राद्धः

पं० हुंडूजाति केशव भट्ट शर्मणा संस्कृतं शोधितमेतत् । कश्मीर प्रताप स्टीम प्रेस श्रीनगर मुद्रणायन्त्रे मुद्रि
प्रकाशितम् ॥ सं० १९६७ नम्बर २२६४

अथैकोद्दिष्टश्राद्धं लिख्यते ॥ अथात एकोद्दिष्टेत्वेकदर्भमेककाण्डाविष्टरमेकपिण्डं नावाहनं नाग्नौ करणं नस्वधा नाश्नत्सु पितृमन्त्रजपोनाऽनुशब्दो, न पात्रमालभ्य जपति नान्नं विकिरे-त्स्वदितमिति तृप्तप्रश्ने, उपतिष्ठतामित्यक्षय्यस्थाने दातारो नोभिवर्धन्तामित्याशिषो न याचेत। शालिचूर्णेन कलशमुल्लिख्य तद्दक्षेऽग्निकुण्डं तदनु प्रतिमार्थां वेदचतुष्टयीं क्षेत्रपालद्वयं । प्रधानम् । अग्नये नमः । वा० सू० व्र० प्र० कू० ६ अग्निना रयिं० प्रजापते० उदग्ने० अग्ने पव० त्वं नस्तन्तु० अग्ने नय० ऋतूनां पत्नी । ऋतस्य धामा । देवा ग्रावाणो । तद्विष्णोः प० । विष्णुपञ्चायतनदेवताभ्यः । प्रतिमायां । तद्विष्णोः प० । वेदचतुष्टयीं प्र० । यो रुद्रो अ० । अग्निमीडे । इषे त्वोर्जेत्वा । अग्न आयाहि । शन्नो देवी० । क्षेत्रस्य पतिना० । ऐन्द्राग्नं० ॥ आसनशोधनादि । अ नाभौ० विष्णुपूजनवत् । तीर्थे स्नेयं । आशीर्वादं । धूपदीपौ । अद्य तावत् महागणपतये० । अग्नये अष्टकादेवतायै । वासुदेवादिभ्यो विष्णुपञ्चायतनदेवताभ्यः शेषशायिने नारायणाय । रुद्राय सानुचराय । पृथिव्यै अग्नये ऋग्वेदाय ब्रह्मणे छन्दोभ्यः । अन्तरिक्षाय वायवे यजुर्वेदाय ब्रह्मणे छन्दोभ्यः । दिवे सूर्याय सामवेदाय ब्र० छ० । ऐं०
दिग्भ्यः चन्द्रमसे अथर्वणवे० ब्र० छ० । हेरकादिभ्यो वटुकादिभ्यः धूपदीपात्संकल्पसिद्धि-रस्तु धूपो नमः दीपो नमः ॥ अपसव्येन । नमः पितृभ्यः ३ । समस्तमातापितृभ्यो धूपः ५.७-

स्वधा ।। कुम्भो वनिष्ठो० अद्य तावत् पितरमुकामुकगोत्र आद्यमौर्ध्वदेहिके प्रथ[illegible] । प्रथममा-
सिके द्वितीये । त्रिपाक्षिके तृतीये । द्वितीयमासिके चतुर्थे । पञ्चपाक्षिके पञ्चमे । तृतीयमासिके
षष्ठे । चतुर्थमासिके सप्तमे । पञ्चममासिके अष्टमे । ऊनषाण्मासिके नवमे । षाण्मासिके दशमे ।
सप्तममासिके एकादशे । अष्टममासिके द्वादशे । नवममासिके त्रयोदशे । दशममासिके चतुर्द-
शे । एकादशमासिके पञ्चदशे । ऊनसांवत्सरिके षोडशे । "यदा संवत्सरमध्येऽधिमासः पतेत्
तदा,, द्वादशमासिके षोडशे । ऊनसांवत्सरिके सप्तदशे ।। " यदा मलमासान्तरे म्रियेत ।
तदा षोडश श्राद्धम् । यदि मलमासान्तः षोडशमौर्ध्वदेहिकमायाति तदा मलान्तरेव सांवत्स-
[illegible] कार्यं । पुनरन्यः सांवत्सरिकेऽन्यस्मिन्मासे कार्यः । [सर्वदा द्वादशे मासे कार्या पिण्डक्रि-
या बुधैः । क्वचित्त्रयोदशेऽपि स्यादाद्यं मुक्त्वा तु वत्सरम् ।। ] एकोद्दिष्टश्राद्धे एष ते धूपः ए-
ष ते दीपः ।। सव्येन । प्रतिमायां जीवादानम् । अ नाभौ । ॐगायत्र्यै नमः ३ विष्णुपूज-
नवद्दक्षिणान्तं सम्पाद्य । अपसव्येन । अद्य तावत् पितुरमुकामुकगोत्रस्याद्यमौर्ध्वदेहिकं प्र-
८० थमं । ऊनसांवत्सरिकं षोडशं कलशप्रीत्या तिलाम्भसा पुण्यवृद्धिरस्तु कलशदेवताः प्रीयन्ता
सव्येन । तद्विष्णोः० । ततोऽग्निसाधनवैश्वदेवादि नित्यकर्माद्वाहाष्टकां च सम्पाद्य । श्राद्धारम्भः
५८ शान्ताकारं । ॐगायत्र्यै नमः ३ अपसव्येन । देवताभ्यः ३ अद्य तावत् पितुः । आद्यमौर्ध्व-

दैहिकं प्रथमं । प्रथममासिकं द्वितीयं । त्रिपाक्षिकं तृतीयं । द्वितीयमासिकं चतुर्थं । पञ्चपा-
क्षिकं पञ्चमं । तृतीयमासिकं षष्ठं । चतुर्थमासिकं सप्तमं । पञ्चममासिकमष्टमं । ऊनषाण्मासि-
कं नवमं । षाण्मासिकं दशमं । सप्तममासिकमेकादशं । अष्टममासिकं द्वादशं । नवममासिकं
त्रयोदशं । दशममासिकं चतुर्दशं । एकादशमासिकं पञ्चदशं । ऊनसांवत्सरिकं सप्तदश-
मेकोद्दिष्टं श्राद्धमष्टकापूर्वं सान्वष्टक्यं ब्रह्मणपूजनमर्चामहं करिष्ये० तिलान्विकीर्य ॥ अग्निं
परिसमूह्य ६ निहन्मि सर्वं० । पितुरमु० आद्यमोर्ध्वदेहिकं प्रथममेकोद्दिष्टं श्राद्धमेतत्ते आसनम्
पितः एतत्ते ब्राह्मणं त्वा भोजयामि ॐभोजय ॥ नावाहनं । तिलान्विकीर्य । श्राद्धानुवाकौ
तूष्णीमार्घं । अपयन्त्वसुराः० इति द्वे अनूहिते । एहि पितर्मनोजवैरागच्छ पितर्मनोजवैः ।
ये निखाता इत्यनूहिता । आगच्छ पितर्मनोजवैः पितः पितः शुन्धस्व । आ मे एतु पिता
भागधेयं विराजा हूतः सलिलात्समुद्रात् । अस्मिन्यज्ञे सर्वकामांल्लभतामक्षीयमाणानुपजीवनमु
यास्तिष्ठन्ति० स्वधया मदस्व० । यन्मे माता । लाजाश्च । भगवन्पाद्यं वा भगवति पाद्यं
शेषं निवार्य । सव्येनाचम्य । अपसव्येन । यास्तिष्ठन्ति० । आपः क्षीरं । भगवन्नर्घ्यं । पि-
तरमुकामुकगोत्रैकोद्दिष्टे श्राद्धे इदं तेऽर्घ्यं । पवित्रं निवार्य । पितः एष ते गन्धः । सव्येनाच-
म्यापसव्येन । पितः एष तेऽर्घः । एतत्ते पुष्पं । एष ते धूपः । एष ते दीपः । एतत्ते वासः ।

ए० ९६

पितुरय तेऽर्घ्यदानाद्यर्चनविधिः सर्वः परिपूर्णोऽस्तु ॥ वसवो मे सदस्यास्तेष। सख्ये स्वध-
या मदस्व स्वधां वहस्वामृतस्य योनिं यात्र स्वधा पितस्तां भजस्व। इदं पित्रे भृतमभिघार्य
प्रक्षाल्य तण्डुलान्पवित्रान्तर्हितानावपति प्रक्षाल्य मूलतो मेक्षणमवदधाति। अग्नावधिश्रित्य
तत्र चाभिघार्य। दक्षिणत उद्वास्य पुनश्चाभिघार्य ॥ दक्षिणपश्चिमाग्रैः स्तरैः स्तृणीयात्।
श्रियै सोमवत्यै० गन्धादि। प्रणवं मनसा ध्यात्वा तूष्णीमाहुतिद्वयमग्नौ जुहुयात् ॥ ॐॐ
हुत्वा तूष्णीं पात्रेषु निक्षिपेत्। ये मामकाः ॥ एतत्ते पितर्भागधेयं पात्रेषु दत्तममृतं स्वधा
वत्। अक्षीयमाणमुपजीवैनं मया प्रत्तं स्वधया मदस्व ॥ अयं यज्ञः परमो यः पितुः पात्रे
देयं हविरयमग्नेः। मनश्च वाक्च पितस्ते प्रधानैरश्विभ्यां प्रत्तं स्वधया मदस्व। एषा त ऊर्गे
पा ते स्वधा तामद्धि च पिब च मा च ते क्षेष्ट। ये ह पितरूर्ग्देवतासु तस्यै वयं ज्योग्जीवन्तो
भूयाः स्म। आ मा सुपक्वममृतं निविष्ट मया प्रत्तं सुधया मदस्व क्षीरं घृतं वासिच्य। पि
तरमुकामुकगोत्र आद्यमौर्ध्वदेहिके प्रथमे एकोद्दिष्टे श्राद्धे एतत्ते अन्नमेतत्ते मधु। इदं विष्णु
५० विष्णो ! इदं रक्षस्व। पितः यथोपस्थितं दत्तं दास्यमानेन सह सव्यञ्जनममृतमन्नमेतत्तेऽन्न
एवं क्रमेण सर्वेषां ब्राह्मणानां क्षिपेत्। ऊनसांवत्सरिके तावत् ॥ सहस्रशीर्षा १६ तद्विष्णोः
६० ये केचिद्यत्र तत्र स्थाः प्रेतभागवशानुगाः। इहैव भूमौ ते सर्वे मद्दत्तमुपभुज्यतामिति तिल

द्र्भेषु प्रेतभागं दत्त्वा । अन्नमद्य दिन अद्य यथा० । यास्तिष्ठन्ति । पितरेतत्तेपोशानं । अप-
हता असुरा रक्षांसि पिशाचा वेदिषदः प्राश्नातु भवान् अमृतं जुषस्वामृतं भुङ्क्ष्व । सव्येन
यन्मे प्रकामादुत वापि० । उशंस्तेन पिता मदतां तेन पूतेनदेवता मादयन्ताम् । अहोरात्रैः०
यत्ते क्रव्याद० । तत्ते एतेन पुनराप्यायतामरिष्ट पितर्मादयस्व । स्वधां वहस्वामृतस्य योनिं
यात्र स्वधा पितस्तां भजस्व ॥ ॐभूर्भुवः स्वः ३ नारायणस्यार्पम् । मधु वात ऋतायते० ।
अन्तश्चरसि भूतेषु० प्राणाय स्वाहा अपानाय० समानाय० उदानाय० व्यानाय० ॥ ॐभूरग्नये
पृथिव्यै महते जातवेदसे जुहोमि १ ॐभुवो वायवेऽन्तरिक्षाय० २ ॐस्वःसूर्यायाकाशाय महते
३ ॐभूर्भुवः स्वश्चन्द्रमसे हरिद्भ्यो महते० ४ ॥ विप्रेषु तृप्तिमागतेषु ॥ अपसव्येन । दक्षिणा-
भिमुखः दक्षिणाग्रान्दर्भानास्तीर्य । यास्तिष्ठन्ति । पितरेतत्तेवनेजनम् । उशन्तस्त्वा० । वा-
मजानुं भूमिं निधाय । तिलास्तोयं । देवताभ्यः ३ अद्य तावत् । पृथिवीदर्वि० पितराद्यमौ-
र्ध्वदेहिके प्रथमे एवं ऊनसांवत्सरिके तावत् १६ पिण्डानि एकोद्दिष्टे श्राद्धे एष ते पिण्डः
अप उपस्पृश्य ॥ ये चात्र त्वेति पठनीयं । मूलपुरुषा भूमिस्वामिनः पितर एष वः पिण्डः ए०
स्वधा ये च वोनु । अत्र पितर्मादयस्व येत्र पितः प्रेतास्त्वां तेनु य इह पितर्जीवा अस्मां-
स्तेनु येत्र पितः प्रेतास्त्वं तेषां वसिष्ठो भूयाः । य इह पितर्जीवा वयं तेषां वर्षिष्ठा भूयास्म । ६१

एतत्ते पितर्वासः । अतो नोन्यत्पितर्मा वृथाः । क्षीरान्नः पितर्देहि । पिण्डलेपं निवारयेत्
पितरमुक॰ आद्यमौ॰ एप ते गन्धः । १६ एप तेऽर्घः १६ एतत्ते पुष्पं एष ते धूपः एप ते दीपः ।
भक्ष्यभोज्य॰ । तिलमधु॰ । पितरेतत्ते हिमपानमित्यादि ॥ सव्येनाचम्य । वसन्ताय नमः ।
अपसव्येन । यास्तिष्ठन्ति । ऊर्जं वहन्ती॰ पितरं मे तर्पयतेत्यूहः । अद्य तावत् । पितः ।
पाथेयं पथि श्रमनिवारणार्थमेतत्ते नित्यान्नं । सव्येन । मा म च्छिष्टा॰ । नैवेद्यम् । अपसव्येन ।
नान्नं विकिरेत् ॥ तिलदर्भक्षीरमेकीकृत्य विकिरेत् । स्वदितं । सुस्वदितं । तृप्यतु भवान् । ते
तृप्तोस्मि । प्रेतस्तृप्यतु । सव्येनाचम्य । पवित्रपाणिः । अपसव्येन । पितः एतत्ते आचम- न
नीयं । यन्मे राम इत्यत्र तेन पूतेन पिता मदत्तां । यास्तिष्ठन्ति । पितः एतत्ते दक्षिणायै॰ प
प्रतिगृह्णामि । अभिरमतु भवान् । अभिरतोस्मि पितरेतत्पूतमत्रोपजीवास्मिंल्लोके मां धेहि
जीवेम शरदः शतं पश्येम शरदः शतम् । अथास्मभ्यमूर्जं धेहि ज्योतिर्देह्यजरन्न आयुः । प
यदन्तरिक्षं पृथिवीति । तृप्यतु भवान् । तृप्तोस्मि । पितस्तृप्यतु । स्त्रीविषये । तृप्यतु भवतीति
ए॰ तृप्तास्मि मातस्तृप्यतु चेद्गोप्रदाने प्रतिमादानं कृतं न स्यात् । तदादौ चेत्रशवलिः । ततोथ
विष्णुप्रतिमाच्छिद्रं कृत्वा । अपसव्येन । दानप्रतिष्ठाविधिमादौ पश्चाज्जलकुम्भदानं यथा श्री
६२ कलशं शुभदं दिव्यं जलेन परिपूरितम् । तस्मात्कलशदानेन मम सन्तु मनोरथाः ॥ सावित्र्य

त्राणि अद्य तावत पितुरमुकामुकस्याद्यमौर्ध्वदैहिकं प्रथममेकोद्दिष्टं श्राद्धं परलोके क्षुत्पिपासानिवारणार्थमिमं जलकुम्भं सहिरण्यं सवाससं सान्नं ददानि ३ प्रतिगृह्णामि ३ वरुणस्त्वा नयत्विति पठेत् । सव्येन । विष्णुप्रतिमादानं । प्रतिमादा चेत्कृतं स्यात्तदा क्षेत्रेशबलिः स्वस्थाने अपसव्येन । ततो नित्यकुम्भदानं ॥ ततोऽक्षय्यं ॥ पितरमुकामुकगोत्रमाद्यमौर्ध्वदैहिके प्रथमे एकोद्दिष्टे श्राद्धे दत्तमन्नमक्षय्यमुपतिष्ठतामिदमन्नमुपतिष्ठतु । नाशिषो वृणीयात् । सव्येन । गायत्र्यै नमः ३ अपसव्येन । देवताभ्यः ३ अद्य तावत् पितुरमुकामुकगोत्रस्याद्यमौर्ध्वदैहिकं प्रथममेकोद्दिष्टं श्राद्धमष्टकापूर्वकं सान्वष्टक्यं ब्राह्मणपूजनमच्छिद्रं सम्पूर्णमस्तु । एवमस्तु । विमुच्य । सव्येनाग्निं परिसमुह्य पर्युक्ष्य ६ अपसव्येन । पितरमुकामुकगोत्राद्यमौर्ध्वदैहिके प्रथमे एकोद्दिष्टे श्राद्धे परलोके क्षुत्पिपासानिवारणार्थं सोदकुम्भान्नदानसहिते नित्यकुम्भे एतत्ते तिलोदकमेतत्ते उदकतर्पणम् । ततो गवां ग्रासादि क्षेत्रेशबलिः । अपसव्येन । तद्विष्णोः पिण्डोपरि पुष्पद्वयं । अन्वष्टकां कृत्वा । आरुचिं स्थापयित्वा कलशाच्छिद्रं । पात्राणि चालयेत् । सव्येनाचम्य । उदकलशं ॥ अपसव्येन । अद्य तावत्पितु- ए०
स्तस्यपरलोके पाददाहादितापनिवारणार्थं तृणासनं तृणपादकं काष्ठपादिकां अग्निभाण्डं दण्डं च ददानि । सव्येन । अनन्तशाख० ॥ ॥*॥ इत्येकोद्दिष्टश्राद्धम् ॥*॥ ६३

## ॥ अथान्वष्टिका ॥

सव्येन । गेहाग्निं परिसमुह्य पर्युक्ष्य ६ गेहाग्नेर्दक्षिणतास्तिस्रः कर्षूर्दक्षिणायताः पूर्वापराः प्रादेशमात्रीश्चतुरङ्गुलपृथ्वीस्तावदन्तरास्तावदवखातास्तासां दक्षिणतः खराः । अपसव्येन इदं पित्रे श्रृतमभिघार्य प्रक्षाल्य मूलतो मेक्षणमवदधाति अग्नावधिश्रित्य तत्र चाभिघार्य । दक्षित उद्वास्य पुनश्चाभिघार्य । सव्येन । गेहाग्नेरग्निमुद्धृत्य । अपसव्येन । खराग्निं प्रणयेत् । यं यं प्रणयेत्तस्य तस्य सव्येन साधनाङ्गं कुर्यात् । परिसमुह्य पर्युक्ष्य ६ एतत्साधनाङ्गमुच्यते एवं द्वितीये तृतीये चोद्धृत्य स्थापनं । गेहाग्नेर्वृतंत्वा सत्येन परिसमुह्य पर्युक्ष्य ६ अपसव्येन प्रणयेत् । सव्येन परिसमुह्य पर्युक्ष्य ६ अपसव्येन । त्रयाणां खराग्नीनां प्रत्येकं परिसमुह्य पर्युक्ष्य परिषिच्य ९ त्रिषु ७२ । एतद्धोमाङ्गं कथ्यते । ततोऽवेक्ष्य कर्षाः ३ कर्षूषु दक्षिणाग्रान्दर्भानास्तीर्य । खरांश्च दक्षिणपश्चिमाग्रैः स्तरैः स्तृणामि तिलजलैरभ्युक्ष्य । प्रणवं मनसा ध्यात्वा खराग्निष्वाहुतिद्वयं द्वयं पितृतीर्थेन जुहुयात् । ॐॐ २ ततोऽधचरुमुद्धृत्य । ति-

अ० लास्तोयं । कर्षूषु पिण्डत्रयं दद्यात् । एतत्ते तत ३ एतत्ते मातः ३ अप उपस्पृश्य ३ । प्रथमामन्नेन पूरयेत् । दधिमधुभ्यामिति द्वितीयां घृतमांसेन श्रृतेनेति तृतीयां । पुंसां सुरां स्त्री-

६४ षु मज्जां विवर्जयेत् । मज्जां तूपनयेत् । गौडी पैष्टी तथा माध्वी विज्ञेया त्रिविधा सुरा । य-

ऋवैका तथा सर्वा न पातव्या द्विजातिभिः ॥ सु॰ (मुपनिनीयेत् । दुग्धेन क्षीरेण । दुग्धेनाभितः परिषिच्य । सक्तवः सर्पिषाभ्यक्ताः क्षीरोदकपरिप्लुताः । नातिद्रवा नातिघना म[illegible] इत्याभिधीयते । मन्थेनाभितः परिषिच्य । ये चात्र सन्निहिताः स्युर्दधिमधुघृतादयस्तैरपि परिषिच्य । एतद्भवते ३ एतद्भवत्यै ३ तृप्यतु भवान् ३ तृप्यतु भवती ३ अत्र पितर्मादयस्व३ अन्त्ये खरे मेक्षणं सव्येन उदङ्ङासीनः प्राणायामः । नमो वः पितरो मन्यव इत्युपस्थानम् ॥ अपसव्येनैव परिस्तरणान्यनुप्रहृत्य खराग्नीन्विमुञ्चति । अग्न आयूंषि १ अग्नेर्ऋषिः २ अग्ने पवस्व ३ तेजोसीति । सव्येन । गेहाग्निं परिसमुह्य पर्युक्ष्य परिषिच्य परिस्तीर्य । अग्नये स्वाहा । प्रजा॰ । सूर्या॰ । प्रजा॰ । विमुञ्चामि । नयामि । धर्मं देहि ॥ इत्यन्वष्टिका ॥

॥ अथ सोदकुम्भे नित्यश्राद्धविधिः ॥

तीर्थे स्नेयं । धूपदीपौ । अद्य तावत् महागणपतये धूपदीपः । अपसव्येन । पितृभ्यः धूपः स्वधा । कुम्भो वनिष्ठो । अद्य तावत् पितरमु॰ सोदकुम्भनित्यश्राद्धनिमित्तमेष ते धूपः एष ते दीपः । सव्येन यथाविधि कलशार्चनवैश्वदेवादि कृत्वा । श्राद्धमारभेत । सव्येनाचम्य गायत्र्यै नमः ३ अपसव्येन । देवताभ्यः ३ अद्य तावत् पितुः सोदकुम्भान्नदाननिमित्तं नित्यश्राद्धं ब्रह्मणपूजनमर्चामहं करिष्ये । तिलान्विकीर्य निहन्मि सर्वं । पितुः सोद॰ ए-

तत्ते आसनम् । पितः सोदकु० एतत्ते ब्रह्मणं त्वां भोजयामि । नावाहनं । तिलान्विकीर्य ।
अपयन्त्वसुराः एकोद्दिष्टवत्पठेत् । यास्तिष्ठन्ति० । लाजाश्च । भगवन्पाद्यं । पितः एतत्ते
पाद्यं । सव्येनाचम्य । अपसव्येन । यास्तिष्ठन्ति० । आपः क्षीरं० भगवन्नर्घ्यं । पितरिदं
तेऽर्घ्यं । एष ते गन्धः । सव्येनाचम्य । पितरेतत्तेऽर्घपुष्पधूपदीपवासांसि । एष तेऽर्घ्यदानाद्य०
इदमन्नमिति चरुं सङ्कल्प्य: भृतमभिघार्य । नाम्ना करणं । प्रणवं मनसा ध्यात्वा० ॐ पा-
त्रेषु निक्षिपेत् । ये मामका क्षीरं घृतं वासिच्य । पितः सोदकुम्भान्नदाननिमित्ते नित्यश्राद्धे
एतत्तेन्नं इदं मधु । विष्णो इदं रक्षस्व । पितः० यथोपास्थितं० एतत्ते सव्यञ्जनमन्नं । अद्य
दिने । यास्तिष्ठन्ति० । पितः एतत्तेऽपोशानं । अपहता असुराः । अमृतं भुंक्ष्व । सव्येन ।
यन्मे प्रका० मधु वात ३ विप्रेषु तृप्तिमागतेषु । पिण्डवर्जं । अपस० । पितः पाथेयं नित्यान्नं
सव्येन । मा मे क्षेष्ठत्यनूहितः । नैवेद्यं । विकिरं । स्वदितं । सुस्वदितं । तृप्यतु भवान्
तृप्तोसि । अतस्तृप्यतु । आचम्य । पितः एतत्ते आचमनीयं । यास्तिष्ठन्ति० । पितः एतत्
सो० दक्षिणायै । अभिरमतु भवान् । कुम्भदानं । सावित्राणि अद्य तावत् पितुः परलोके क्षुत्पि-
पासानिवारणार्थं सोदकुम्भान्नदाननिमित्तं नित्यश्राद्धं सहिरण्यं सवाससं सलवणं ददामि
६६ प्रतिगृह्णामि । पितः एतद्दत्तमन्नमक्षय्यमुपतिष्ठतामिदमन्नमुपतिष्ठतु । नाशिषो वृणीयात्

पूर्वंयद्ब्रह्मणस्य पृच्छां विसर्ज्य । अद्य तावत् पितः परलोके० एतत्ते तिलोदकमेतत्ते उदक-
तर्पणम् ॥ गवां ग्रासादि । नमो ब्रह्मणे । पात्राणि चालयेत् । सव्येनाचम्य । उदकलशं ।
अनन्तशास्त्र० २ ॥

॥ इति सोदकुम्भे नित्यश्राद्धविधिः ॥

॥ अथ सपिण्डीकरणम् ॥

एकोद्दिष्टवदात्मपूजां विधाय धूपदीपः । अपसव्येन । पितृभ्यः धूपः स्वधा । पुनः ।
अद्य तावत् पितामहाय प्रपितामहाय वृद्धप्रपितामहाय धूपः स्वधा । कुम्भो वनिष्ठो । पितः
समानसपिण्डीकरणे श्राद्धे एष ते धूपः । सव्येन । ततः कलशार्चनवैश्वदेवादि नित्यकर्म
विधायाष्टकां च निवर्त्य श्राद्धमारभेत । आदावुदङ्मुखांश्चतुर्ब्राह्मणान्विश्वेदेवार्थे प्राङ्मु-
खौ द्वावुपविश्य । सव्येनाचम्य । श्राद्धकाले० । शान्ताकारं० । गायत्र्यै नमः ३ अपसव्येन
देवताभ्यः ३ अद्य तावत् पितामहस्य प्रपितामह . . वृद्धप्रपितामहस्य । तथापितुरमुकस्या-
मुकगोत्रस्य प्रथमसांवत्सरिकं समानसपिण्डीकरणं वैश्वदेवाष्टकापूर्वकं सान्वष्टक्यं श्राद्धं ब्रा-
ह्मणपूजनमहं करिष्ये । तिलान्निकीर्य । अग्निं परिसमुह्य ९ पुरूरवस्यार्द्रवसोः विश्वेषां दे- स०
वानामिदमासनं नमः । वासो नम इत्यन्तं । अपसव्येन । पितामहस्य प्रपितामहस्य वृद्धप्र-
पितामहस्येदमासनं स्वधा । पितरेतत्ते आसनं । पितामहाय प्रपितामहाय वृद्धप्रपितामहाय ६७

तामह
द्धानु-
वतिप-
पेताम-
पाद्यं
ाद्यम्
मातेति
मे प्रपि
यथात्त्य
अघ्यां
सं सृजतु
संसृजश्च
धा नमः
ये कल्प

ब्राह्मणं त्वां भोजयामि ॐ भोजय । पितरेतत्ते ब्राह्मणं त्वां भोजयामि० । पितामहं प्रपितामहं
ब्राह्मणं त्वां भोजयामि ॐ भोजय । पितरेतत्ते ब्राह्मणं त्वां भोजयामि० । तिलान्विकीर्य । श्राद्धानु-
वृद्धप्रपितामहं पितः प्रेतसहितान्पितॄनावाहयिष्यमि ॐ आवाहय । एहि पितर्मनोजवः । एकोद्दिष्टवत्पि-
वाक्यो तूष्णीमार्घम् । अयन्त्वसुरा सांवत्सरिकवत् । यन्मे पितामहीति द्वितीये । यन्मे प्रपिताम-
तृपात्रत्रये । यास्तिष्ठन्ति० यन्मे मातेति प्रथमे । यन्मे पितामहीति द्वितीये । यन्मे प्रपिताम-
हीति तृतीये । प्रेतपात्रे । यास्तिष्ठन्ति० स्वधया मदस्वेत्यूहः । लाजाश्च । भगवन्तः पाद्यं ।
भगवन्पाद्यं । पितामहाय पाद्यं स्वधा । प्रपि० । वृद्धप्र० । पितः समान० एतत्ते पाद्यम् ।
शेषं निवार्य । सव्येनाचम्यापसव्येन । यास्तिष्ठन्तीति षट् । यास्तिष्ठन्ति । यन्मे मातेति
प्रथमे । यन्मे माता । यन्मे पितामहीति द्वितीये । यन्मे माता । यन्मे पितामही यन्मे प्रपि-
तामहीति तृतीये । प्रेतपात्रे । स्वधया मदस्व ॥ आवाहने तथा चान्ते पिण्डदाने तथाऽर्घ्ये
चतुर्षु प्रक्षिपेत्प्रेतं पिण्डयज्ञे विधानतः ॥ गन्धोदकजलैर्मिश्रं कुर्यात्पात्रचतुष्टयम् । अर्घ्यार्-
थं पितृपात्रेषु प्रेतपात्रं प्रसेचयेत् । धातुत्रयेण सह प्रेतपात्राज्जलं निकर्षयित्वा । सं सृजतु
स० त्वेत्यभिमन्त्र्य पितृपात्रेषु प्रसेचयेत् ॥ सं सृजतु त्वा पृथिवीर्वायुरग्निः प्रजापतिः संसृजध्वं
पूर्वेभिः पितृभिः सह ये समानाः समनसः पितरो यमराज्ये । तेषां लोके स्वधा नमो
यज्ञो देवेषु कल्पताम् । ये समानाः सुमनसो जीवा जीवेषु मामकाः । तेषां श्रीर्मयि कल्प-

स्तामस्मिंल्लोके शतं समाः । समाना व आकूतानि समाना हृदयानि वः । समानमस्तु वो मनो
यथा वः सुसहासति । सं वो मनांसि सं व्रताः समुच्चितान्याकरत् । अमी ये विव्रताः स्थ न-
स्तान्वः सन्नमयामसि । वसुभ्यः स्वधेति प्रथमे । एवं । रुद्रेभ्यः स्वधेति द्वितीये । आदि-
त्येभ्यः स्वधेति तृतीये । आपः क्षीरं० । भगवन्तोर्घ्यं ३ । भगवन्नर्घ्यं । पितृपितामहावमुक-
गोत्रा इदं वामर्घ्यं स्वधा । एवं पितृप्रपितामहौ० । पितृवृद्धप्रपितामहौ० । प्रेतपात्रात् । पित-
रिदं तेऽर्घ्यं । पितामहाय समाल० । पितः समानस० एष ते गन्धः । सव्येनाचम्यापसव्येन
पितामहाय अर्घः स्वधा पुष्पं स्वधा । पितः एष तेऽर्घः एतत्ते पुष्पं । धूपदीपवासांसि स्वधा ।
एतत्ते वासः दक्षिणाग्रान्दर्भानास्तीर्य । शुन्धन्तां लोकाः । अपसव्येन । पितृषदनाः पितृ-
षदनमसि पितृभ्यः स्थानमसि पितृभ्यो गन्धादि वासोन्तम् । पितृणामर्घ्यदानाद्यर्चनविधिः
सर्वः परिपूर्णोऽस्तु । आदित्या रुद्रा वसवो० इति पितृब्राह्मणेषु । पितरेष तेऽर्घ्यदानाद्यर्च० ।
वसवो मे सदस्या इत्यादि पितस्त्वां भजस्व । इति प्रेतब्राह्मणे । सव्येन । इदमन्नं देवेभ्यः
शृतमभिघार्य । अपसव्येन । इदमन्नं पितृभ्यः शृतमभिघार्य । विष्णुर्मनसेत्येकं दर्भं पवित्र-  स०
मुन्मृज्य पितृचराववस्थाप्य । विष्णुर्मनसा पूते स्थः इत्यन्यत्पवित्रमुन्मृज्य प्रेतपाकेवस्थाप्य
च । प्रक्षाल्य मूलतो मेक्षणमवदधाति । पितृचरौ । अग्नावधिश्रित्य तत्र चाभिघार्य । दक्षि-  ६९

णत उद्वास्य। प्रेतचरौ अग्नावधिश्रित्य ॥ दक्षिणपश्चिमाग्रैः स्तरैः स्तृणीयात्। यज्ञस्य स-
न्ततिरिति। अग्नौ करवाणि ॐकुरु इत्युक्त्वा। सोमाय पितृमते स्वधा नमः १ अग्नये कवि-
वाहनाय स्वधा नमः। तूष्णीं पात्रेषु निक्षिपेदिति पितृपाके। प्रणवं मनसा ध्यात्वा प्रेत-
पाकात् ॐॐ इत्याहुतिद्वयमग्नौ हुत्वा। तूष्णीं प्रेतपात्रे निक्षिपेत् ॥ ये मामका इति चरुद्व-
यमभिमन्त्र्य। एतद्वः पितर इत्याद्या मन्त्रा पितृब्रह्मणेष्वनूहिताः। क्षीरं घृतं वासिच्य।
प्रेतब्राह्मणे। एतत्ते पितर्भागधेयमित्याद्युहिताः। क्षीरं घृतं वासिच्य। सव्येन। वैश्वदेवहवि-
षे० क्षीरं घृतं वासिच्य विश्वेभ्यो देवेभ्योन्नं नमः २ विष्णो हव्यं रक्षस्व विश्वेभ्यो० यथोपस्थि-
तं दत्तं। नमो देवेभ्यः। अपसव्येन। पितामहायान्नं स्वधा नमः ३ विष्णो कव्यं रक्षस्व।
यथोपस्थितं दत्तं। स्वधा पितृभ्यः। प्रेतपात्रे। पितः समानसपिण्डीकरणे श्राद्धे एतत्तेन्नं
इदं मधु विष्णो इदं रक्षस्व। पितः यथोपस्थितं अमृतमन्नमेतत्तेन्नं। सव्येन। पयः पृथि-
व्याः ५ श्राद्धब्राह्मणं। पुरुषसूक्तलक्ष्मीसूक्तौ। अपसव्येन। अद्य दिनेऽद्य यथा०। सव्येन।
स० शन्नो देवी। विश्वेभ्यो देवेभ्योऽपोशानं नमः। अपसव्येन। यास्तिष्ठन्ति। स्वधया मदध्वं।
पितामहादिभ्योऽपोशानं स्वधा। स्वधया मधस्व। पितः समानसपि० एतत्तेऽपोशानं पि-
७० तृपाके। तिलमन्नं० प्राश्नन्तु भवन्तः। प्रेत्ये प्राश्नातु भवान् भवती वा अमृतं जुषस्वामृतं भुङ्क्ष्व

सव्येन । यन्मे प्रकामा इति समीच्यमानो जपति । प्रैत्ये । यात्र स्वधा पितस्तां भजस्व । नारा-
यणस्यार्पं । मधु वाता ३ ब्रह्मार्पणं । अपसव्येन । द्वयोः दक्षिणाग्रान्दर्भानास्तीर्य । यास्तिष्ठ-
न्ति । पितृभ्योऽवनेजनं स्वधा उशन्तस्त्वा ॥ प्रेत्ये । यास्तिष्ठन्ति । पितः समानसपिण्डीकरणे
श्राद्धे एतत्तेऽवनेजनं । उशन्तस्त्वा० पितरं हविषे अत्तवे । पितृचरोरन्नमुद्धृत्य । तिलास्तोयं ।
देवताभ्यः ३ अद्य तावत् । पृथिवीदर्विः० पितामह एष ते पिण्डः वसुभ्यः स्वधा षष्ट ते लेपः अ-
प उपस्पृश्य । अन्तरिक्षं० प्रपितामह एष ते पिण्डः रुद्रेभ्यः स्वधा पञ्चम एष ते लेपः अप उ० ।
द्यौर्दर्विः० वृद्धप्रपितामह एष ते पिण्डः आदित्येभ्यः स्वधा चतुर्थ एष ते लेपः अप उ० । मूल-
पुरुषः । वीराश्च: पितरो दत्त पिण्डलेपं निवारयेत् । प्रेतचरोरन्नमुद्धृत्य । तिलास्तोयं । देवता-
भ्यः ३ अद्य तावत् पृथिवीदर्विः । पितः समान० एष ते पिण्डः अप उ० । अत्र पितर्मादयस्व ।
एतत्ते वासः । वीरान्नः पितर्धेहि । पिण्डलेपं निवार्य । पितामहाय समालभनं गन्धादि । पितः
एतत्ते गन्धादि । सव्येन । वसन्ताय नमः० । अपसव्येन । यास्तिष्ठन्ति । ऊर्जं वहन्ती० । पुनः
यास्तिष्ठन्ति । ऊर्जं वहन्ती पितरं मे तर्पयत ॥ प्रेतपिण्डे प्रेतस्वरूपं ध्यात्वा तद्विष्णोरिति पुष्प- स०
द्वयं । [दत्त्वा पिण्डमथाष्टाङ्गं ध्यात्वाथ च सुभास्वरम् । सौवर्णरौप्यदर्भैश्च तं पिण्डं विभजेत्त्रि-
धा ॥ कृत्वा पितामहादिभ्यः पितृभ्यः प्रेतमर्पयेत् । अर्घैः पुष्पैस्तथा धूपैर्दीपैर्वस्त्रानुलेपनैः] ॥ ७१

त्रेधं करिष्ये इत्युक्त्वा । ॐकुरुष्वेति ब्राह्मणवाक्यं श्रुत्वा तं पिण्डं सौवर्णरजतदर्भैर्यथाक्रमं वि-
भज्य यथाधस्तनभागे वसुभ्यो भागः । मध्यमे रुद्रेभ्यो भागः । शिरोभागे । आदित्यभ्यो भा-
गः । पितामहादि पिण्डेभ्यो दत्वाऽर्घ्योदकसंसर्गवत्संसृजेत् । यथा मधु चाज्यं जलं चार्घ्यं पु-
ष्पं धूपविलेपनम् । बलिं दद्याच्च विधिवत्पिण्डोष्टाङ्गो भवेद्यथा । तिलास्तोयं । संसृजतु त्वेति ।
देवताभ्यः ३ अद्य तावत् पृथिवीर्दर्विः अग्निरिव पृथिवीमुपजीवतं पितृपितामहावेष वां पिण्डो
ये चात्र वामन्वेषा वां स्वधा वसुभ्यः स्वधा सप्तम एष ते लेपः । अपउ० १ ।। एवं सं सृजतु त्वा
अन्तरिक्षं दर्विः वायुरिवान्तरिक्षमुपजीवतं पितृप्रपितामहावेष वां पिण्डो ये चात्र वामन्वे-
षा वां स्वधा रुद्रेभ्यः स्वधा षष्ठ एष ते लेपः । अप उ० २ ।। सं सृजतु त्वा । द्यौर्दर्विः
सूर्य इव दिवमुपजीवतं पितृवृद्धप्रपितामहावेष वां पिण्डो ये चात्र वामन्वेषा वां स्वधा आ-
दित्येभ्यः स्वधा पञ्चम एष ते लेपः । अप उ ३ ।। स्त्रीविषये द्विर्वचने । पृथिवीर्दर्विं मातृ-
पितामह्यौ । अन्तरिक्षंदर्विः मातृप्रपितामह्यौ द्यौर्दर्विः । मातृवृद्धप्रपितामह्यौ । बहुवचने तु
स० पृथिवीर्दर्विः पृथिवीमुपजीवत मातृपितामह्यः एष वः पिण्डो ये चात्र वोन्वेषा वः स्वधा
सप्तम । अन्तरिक्षंदर्विः अन्तरिक्षमुपजीवत मातृप्रपितामह्यः एष वः पिण्डो ये चात्र वोन्वे-
७२ षा वः स्वधा षष्ठ । द्यौर्दर्विः दिवमुपजीवत मातृवृद्धप्रपितामह्यः एष वः पिण्डो ये चात्र

वोन्वेषा वः स्वधा पञ्चम एव ते लेपः । अत्र पितरो मादयध्वं । येत्र पितरः प्रेता यूयं ते-
षां० । वीरान्नः पितरो दत्त पिण्डलेपं निवारयेत् । पितृपितामहाभ्यां पितृप्रपितामहाभ्यां
पितृवृद्धप्रपितामहाभ्यां स्त्रीविषये द्विवचने मातृपितामहीभ्यां वहुवचने मातृपितामहीभ्यः
समानसपिण्डीकरणे श्राद्धे समालभनं गन्धादि स्वधा । अर्घपुष्पधूपदीपभक्ष्यभोज्यबलिः।
तिलमधुमिश्रमुदकपात्रमाचमनीयं स्वधा । एतद्वां हिमपानं स्वधा । सव्येनाचम्य । वसन्ता-
य नमः । अपसव्येन । यास्तिष्ठन्ति । ऊर्ज वहन्ती । अरुचिमभिमन्त्र्य । सव्येन । मा मे-
वेष्ठा । नैवेद्यं । विकिरं पितृब्राह्मणेषु सर्वमन्नं । प्रेत्ये । स्वदितं । हस्तौ प्रक्षाल्य । सव्येन
असोमपाः० । आचम्यापसव्येन । पितृभ्य आचमनीयं स्वधा । पितः एतत्ते आचमनीयं ।
सव्येन । विश्वेभ्यो देवेभ्यः आचमनीयं नमः । अपसव्येन । यन्मे रामः० । यास्तिष्ठन्ति । पि-
तृभ्यो दक्षिणायै । अभिरमन्तु० तृप्यन्तु ३ । यास्तिष्ठन्ति । पितः समानस० एतत्ते दाक्षिणायै।।
अभिरमतु भवान् प्रेतस्तृप्यतु । एकोद्दिष्टवत्स्वन्नेशवलिः विष्णुप्रतिमाच्छिद्रं । जलकुम्भं प्रति-
मां नित्यकुम्भं च दत्वाऽक्षय्यं साध्यं यथा पात्रत्रये जलं संस्थाप्य । गन्धोदकजलैर्मिश्रं कु-
र्यात्पात्रचतुष्टयम् । निदध्यात्पितृपात्रेषु प्रेतपात्रं प्रसेचयेत् । सं सृजतु त्वा० । वसुभ्यः स्वधा।
सं सृजतु त्वा० । रुद्रेभ्यः स्वधा । सं सृजतु त्वा० । आदित्येभ्यः स्वधा । पितृपितामहयोः

समान० एतद्दत्तमन्नमक्षय्यमस्तु स्वधा इदमन्नमक्षय्यमस्तु स्वधा । एवं पितृपितामहयोः ।
पितृवृद्धप्रपितामहयोः । स्त्रीविषये । मातृपितामह्योः मातृप्रपितामह्योः मातृवृद्धप्रपितामह्योः
बहुवचनं । मातृपितामहीनां एवं । सव्येन । दातारो नो । अपसव्येन । पितरं समानसपि-
ण्डीकरणे श्राद्धे एतद्दत्तमन्नमक्षय्यमुपतिष्ठतमिदमन्नमुपतिष्ठतु । नाशिषो वृणीयात् । सव्येन
शन्नो देवी । विश्वेभ्यो देवेभ्यो दक्षिणायै विश्वेदेवाः प्रीयन्तां प्रीताः ॥ शन्नो भवन्तु । सं
स्रावपात्रं । वाजे वाजे । अपसव्येन । आमा वाजस्य । सव्येन । गायत्र्यै नमः । अपस
व्येन देवताभ्यः ३ अद्य तावत् पितामहस्य प्रपितामहस्य वृद्धप्रपितामहस्य तथा पितुः प्रथ
मसांवत्सरिकं समानसपिण्डीकरणं वैश्वदेवाष्टकापूर्वकं सान्वष्टक्यं श्राद्धं ब्राह्मणपूजनमच्छि
द्रं सम्पूर्णं । विसृंचामि । नयामि । सव्येनाग्निं परिसमूह्य पर्युक्ष्य ६ अपसव्येन । पित्रे पि
तामहाय प्रपितामहाय तिलोदकं स्वधा । सव्येन । भगवन्यज्ञमेतत्तेन्नमाचमनीयं । कण्ठ
पवीती हन्त स० सव्येन । गोः गादि । क्षेत्रशबलिः । आयुः प्रजा । पात्राणि चालयेत् ।
स० [श्रान्तसंवाहना रोगिपरिचर्या शिवार्चनम् । पादशौचं द्विजोच्छिष्टमार्जनं गोप्रदानवत् ॥
अथ सपिण्डीकरणेन्वष्टका ॥ सव्येन । गेहाग्नेर्दक्षिणतः पट्कर्षूः पूर्वोक्तरूपाः कुर्यात्
७४ तासां दक्षिणतस्तथैव मृदा षट्खरान्कुर्यात् । गेहाग्निं परिसमुह्य पर्युक्ष्य ६ अपसव्येन ।

तृभ्यः शृतमभिघार्य । इदं पित्रे शृतं । चरुद्वये प्रक्षाल्य मूलतो मेक्षणमवदधाति । अग्ना-
धिश्रित्य । सव्येन । गेहाग्नेरग्निमुद्धृत्य । अपसव्येन । खराग्निं प्रणयेत् । सव्येन । साधनाङ्ग
र्यात् । एवं षट्सु ,त्य स्थापनं । गेहाग्नेः परिसमुह्य पर्युक्ष्य ६ अपसव्येन प्रणयेत् सव्येन
रिसमुह्य पर्युक्ष्य ६ अपसव्येन खराग्निषु प्रत्येकं परिसमुह्य पर्युक्ष्य परिषिच्य ६ षट्सु ५४
वेक्ष्य कर्षूः ६ कर्षूषु दक्षिणाग्रान्दर्भानास्तीर्य । खरांश्च दक्षिणपश्चिमाग्रैः स्तरैः स्तृणा-
। तिलजलैरभ्युक्ष्य । पूर्वखराग्निषु त्रिषु अग्नौ करवाणि ॐकुरु । सोमाय पितृमते स्वाहा
ग्नये कव्यवाहनाय स्वाहा ॥ इति त्रयाणामाहुतिद्वयं द्वयं जुहुयात् । अपरेषु त्रिषु प्रेतपा-
दन्नमुद्धृत्य । ॐॐइति द्वे द्वे आहुतीर्दद्यात् । तिलास्तोयं । पितृपाकान्मेक्षणेन चर्वर्धमु-
धृत्य पूर्वासु पितृकर्षूषु मूलमध्याग्रदेशेषु पिण्डानां त्रयं त्रयं दद्यात् । एतत्ते पितामह ये
त्वांनु । अप उ० ३ । प्रपितामह ३ । वृद्धप्रपितामह ३ । एवं प्रेतपाकाच्चर्वर्धमुद्धृत्य । ति-
लास्तोयं अपरासु कर्षूषु पिण्डत्रयं दद्यात् । एतत्ते तत ३ वा एतत्ते मातः अप उप० । प्र-
मां स्वस्वान्नेन पूरयेत् दधिमधुभ्यामिति द्वितीयां । घृतमांसेन शृतेनेति तृतीयां । पुंविषये स०
जां तूपनिनीय ६ स्त्रीविषये सुरां तूपनिनीय ६ दुग्धेनाभितः परिषिच्य ६ सक्तवः सर्पि-
भ्यक्ताः । मन्थेनाभितः परिषिच्य ६ ये चात्र सन्निहिता रसाः स्युर्दधिमधुघृतादयस्तैरपि ७५

परिषिच्य ६ पितॄन्ध्यायन् एतद्भवद्भ्यः ३ मातृविषये । एतद्भवतीभ्यः ३ तृप्यन्तु भवन्तः
वा भवत्यः ३ अत्र पितरो मादयध्वं । प्रेतं ध्यायन् एतद्भवते वा भवत्यै । तृप्यतु भवान्वा
भवती ३ अत्र पितर्वा मातर्मादयस्व३ तद्विष्णोरिति प्रेतपिण्डेषु पुष्पद्वयं २ निधाय प्रत्येकं प्रेत-
पिण्डं त्रेधं करिष्य इत्युक्त्वा ॐकुरुष्वेति वसुभ्यो भागः । रुद्रेभ्यो भागः । आदित्येभ्यो
भागः इति सौवर्णरौप्यदर्भैर्विभज्य स्वं स्वं भागं निदध्यात् । ततो मधु चाज्यमित्यादीन्संयूय
संसृजतु त्वेत्याद्यैर्मन्त्रैः संसृजेत् । सपिण्डीकरणवत्संसर्गः । एतद्वां पितृपितामहौ ये च वा-
मनु सप्तम एष ते लेपः । अप उ० । सं सृजतु त्वा । एतद्वां पितृप्रपितामहौ ये च वामनु
षष्ट एष ते लेपः । अप उ० । एतद्वां पितृवृद्धप्रपितामहौ ये च वामनु पञ्चम एष ते लेपः ।
एवं द्वितीयकर्षौ तृतीये च ॥ एवं स्त्रीविषये ॥ मातृपितामह्यौ सप्तम । मातृप्रपितामह्यौ षष्ठ ।
मातृवृद्धप्रमातामह्यौ पञ्चम । पूर्वचरोरन्नशेषेन । पुनः प्रथमामन्त्रेन पूरये इत्यादि पूर्ववत्कृ-
त्वाऽन्त्ये खरे मेक्षणं । सव्येन । उदङ्ङासीनः प्राणायामः । नमो वः पितर इत्युपस्थानं
स० ततः खराग्नीन्विमुच्य नयामि । अग्न आयूंषि । अग्निर्ऋषिः । अग्ने पवस्व । भगवन्पुण्डरी-
काक्ष । अग्निं परिसमुह्य ९ पुरस्तात् अग्नये स्वाहा । प्रजापतये स्वाहा । सूर्याय स्वाहा । प्र०
७६ विमुच्य । नयामि । धर्मं धेहि ॥ [त्रिपक्षे पञ्चपक्षे वा ऊनषाण्मासिके तथा । ऊनसंवत्सरे

त्र सपिण्डीक रणं स्मृतम् ॥] वर्षं तावद्द्विर्वारं सपिण्डीकरणं कार्यम् ॥
॥ इति सपिण्डीकरणं समाप्तम् ॥

—=:*:=—

अथ छत्रदानम्

मृद्भस्मगोमयैः स्नाप्य कषायफलवारिभिः ॥ आक्रम्य० । इह गावः । प्रसद्य भस्मना ।
: फलिनीः । उदुत्तमं ॥ तत एकविंशतिस्नानं ॥ गायत्र्यै नमः १ निर्दग्धं २ उदुत्तमं ३
गावः ४ रक्षोहनं ५ बृहत्साम क्षेत्रभृद्वृद्धवृष्ण्यं त्रिष्टुभौजा शुभीमुग्रवीरम् । इन्द्रस्तो-
न पञ्चदशेनौजसा इदं वातेन सागरेण वृत्त्याः ६ चत्वारि शृङ्गास्त्रयो अस्य पादा द्वे शी-
सप्तहस्तासो अस्य । त्रिधा बद्धो वृषभो रोरवीति महो देवो मर्त्यामाविवेश ७ मनसा
ममा ८ हिरण्यवर्णां हरिणीं ९ तारास मन्दि धावति धारासुतोस्यान्धसा । तारास म-
धावति १० इमं मे वरुण ११ एतो न्विन्द्रं स्तवामहेऽहं शुद्धं शुद्धेन साम्ना । शुद्धैरुक्थै-
द्धा संशुद्धैराशीर्वान्मम १२ इन्द्रा पर्वता १३ वात आ वात भेषजं शम्भुमयो भुवि हृ- छ०
। प्राण आयूंषि तारिषम् १४ अश्वक्रान्ते १५ अग्निर्ऋषिः १६ ऋतं च सत्यञ्चा १७
वात ऋतायते १८ दधि क्राव्णो १९ या ओषधयः २० समुद्राद् २१ छत्राय एक- ७७

विंशतिस्नानं परिकल्पयामि नमः । पुरुषसूक्तलक्ष्मीसूक्ताभ्यां च स्नानं ॥ आश्विलायनोक्तं
तर्पणखण्डं । ब्रह्मा तृप्यतां । देवास्तृप्यन्तु । अग्निः । सूर्यः । चन्द्रमाः । इन्द्रः । ग्रहाः ।
विष्णुः रुद्रः प्रजापतिः छन्दांसि वेदाः ऋषयः ॐकारः वषट्कारः व्याहृतयः महाव्याहृतयः
गायत्री सावित्री सरस्वती यज्ञः द्यावापृथिव्यौ अन्तरिक्षं नक्षत्राणि संवत्सराः ऋतवः
मासाः पक्षाः दिनानि अहोरात्रं सांख्याः साध्याः सिद्धाः समुद्राः नद्यः गिरयः क्षेत्रौ-
षधिवनस्पतयः गन्धर्वाप्सरसः विप्राः वयांसि गावः यक्षाः भूतानि ऋषयः पशवः सुपर्णाः
असुराः क्रूराः ॥ ब्रह्माणं तर्पयामि विष्णुं महेश्वरं ईश्वरं रुद्रं वह्निं सूर्यं सोमं वरुणं यमं इन्द्रं
नैर्ऋतं कुबेरं ईशानं केशवं पृथिवीं अपः तेजांसि वायुं आकाशं अग्निं आदित्यं वरुणं सो-
मं कुमारं अङ्गारकं हरिं सौम्यं शक्रं जीवं सरस्वतीं दैत्यगुरुं प्रजापतिं कालं असितं गणपतिं
राहुं रुद्रं केतुं परमेष्ठिनं ध्रुवं अनन्तं अगस्त्यं वसून् रुद्रान् आदित्यान् मरुतः साध्यान् अ-
प्सरसः समुद्रान् पर्वतान् नक्षत्राणि नक्षत्रदेवताः देवमातृः देवपत्नीः देवकन्याः देवान् वे-
७० दान् वेदाङ्गानि यज्ञान् यज्ञाङ्गानि धर्मार्थकाममोक्षान् शास्त्रप्रणेतॄन् सत्वं रजः तमः
दिक्पतीन् विदिक्पतीन् तारकान् तीर्थानि नदीः सप्तपातालान् सप्तलोकान् विश्वेदेवान्
७८ श्रियं दिवाचरान् निशाचरान् खेचरान् रात्रिचरान् जलचरान् स्थावरान् जङ्गमान् ऋग्वेद

यजुर्वेदं सामवेदं अथर्ववेदं कृतयुगं त्रेतायुगं द्वापरयुगं कलियुगं अष्टादशपुराणानि दश-
विश्वेदेवान् द्वादशभृगून् चतुर्दशभुवनानि आत्मदेवताः परमात्मदेवताः बाह्यात्मदेवताः ॥
कण्ठोपवीती ॥ अग्निर्ऋषिः । सनकः सनन्दनः सनातनः सनत्कुमारः कपिलः आसुरः
वोढः पञ्चशिखः मरीचिः अत्रिः अङ्गिराः पुलहः पुलस्त्यः भृगुः प्रचेताः क्रतुः वसिष्ठः
नारदः ऋषयः शतर्चिनः मध्यमः गृत्समदः विश्वामित्रः वामदेवः भरद्वाजः कश्यपः
जमदग्न्यः प्रगाथः पावमान्यः क्षुद्रसूक्तः महासूक्तः सप्तर्षिगणः गौतमः च्यवनः विष्णुः
देवलः लोमर्षिः दीर्घतपाः पराशरः पाराशर्यः वाल्मीकिः वत्सः शौनकः लौगाक्षिः क-
पिलः हारीतः आपस्तम्भः सुमन्तुः बौधायनः याज्ञवल्क्यः मनुः दक्षः शङ्खः ऋषिशृङ्गः
कौशिकः गर्ग्यः कुत्सः अगस्त्यः सर्वे मुनयः अहिंसकाः प्रहिंसकाः सर्वभूताधिपतयः ॥
अपसव्येन । उशन्तस्त्वा हवा० । कव्यवाडनलः स्वधा ३ यमः समन्तु जैमिनि वैशम्पाय-
न पैलसूक्त ५।५ भारत महाभारतं तर्पयामि । जानकि वाहवि गार्ग्य गालव गोविल शाकल्य
शौनक सुलभा मैत्रेयं कवोडं कौशूदं पैङ्ग्यं महापैङ्ग्यं महायज्ञं स्वयज्ञं साध्यायनं आश्व- ७०
लायनं औदवाहिनं महौदवाहिनं शैशरीयं महाशैशरीयं कौशीतक्यं ऐतरीयं महैतरीयं
गार्ग्य वाष्कलं ये चान्ये आचार्यास्ते सर्वे तृप्यन्तु ॥ देवताभ्यः ३ अद्य तावत् पितः मा- ७६

तृप्यन्त्यास्तु । सव्येन । वसन्ताय । देवासुराः । नमो देवेभ्यः ।। ॐकुशब्राह्मणे जीवादा
गायत्र्यै नमः ३ वज्रपाणये विद्महे सहस्राक्षाय धीमहि तन्न इन्द्रः प्रचोदयात् ३ एकपाद
वि० । आतपत्राय धी० । तन्नश्छत्रः प्र० ३ अद्य तावत् इन्द्रस्य शतमन्योः छत्रस्य अ
त्मनो० पितुः तस्य परलोके घुर्घुरपुराख्ये देशे अतिवृष्ट्यादिदोषनिवारणार्थं इन्द्रयुतछ
पूजनमर्चामहं करिष्ये । इन्द्रस्य शतमन्योः इदमासनं नमः । छत्रस्येदमा० । इन्द्राय शत
न्यवे छत्राय त्वां पूजयामि इन्द्रं शतमन्युं छत्रमावाहयिष्यामि ॐआवाहय ।। आवाहयाम्
देवं वज्रहस्तं शचीपतिम् ऐरावणसमारूढं गणरुद्राप्सरोवृतम् । पीतवर्णो० ।। आवा
ब्रह्मपुत्रं बृहस्पतिम् । देवानां सद्गुरुं चैव शक्रस्य च पुरोहितम् । रक्तवर्णो० । इन्द्रं कुल
आवा० छत्रमिन्द्रेण वै युतम् । महातापप्रशमनं परलोके सुखप्रदम् । पीतव० । भगव
ण्ड० । पाद्यार्घ्यगन्धपुष्पादि । छत्रस्य पुष्पपूजा । पादेषु ऋग्वेदाय यजु साम अथर्व
कृतयुगाय त्रेता द्वापर कलि । मित्राय वरुणाय पूष्णे धात्रे अर्यम्णे यमाय इन्द्राय
छ० स्वते दीक्षांशवे सूर्याय मार्तण्डाय विष्णवे मेषाय वृषाय मिथुनाय कर्कटाय सिंहाय क
यै तुलायै वृश्चिकाय धन्विने मकराय कुम्भाय मीनाय मेरवे मलयाय अस्ताचलाय उद
८० चलाय अजैकपदे अहिर्बुध्न्याय कृत्तिवाससे पिनाकभृते वृषाकपये सिन्धवे कपर्दिने

67

बहुरूपाय हराय रुद्राय त्र्यम्बकाय शेषाय वृषभाय सुवर्णाय रजताय ताम्राय हरितालाय मन-
शिलाय अभ्रकाय गन्धकाय भूर्लोकाय भुवो० स्व० महो जनो तपो सत्यलो। तलाय अतला-
य सुतलाय वितलाय तलातलाय रसातलाय पातालाय मरीचये आत्रेयाय आङ्गिरसाय पुल-
स्त्याय पुलहाय कश्यपाय गौतमाय क्रतवे वसिष्ठाय नारदाय विष्णवे मनवे च्यवनाय संवर्ताय
बृहस्पतये उशनसे शङ्खाय लिखिताय शातातपाय पराशराय ब्रह्मणे दक्षाय यमाय आपस्त-
म्भाय देवलाय वृद्धाय बौधाय व्यासाय जमदग्न्याय छागलेयाय विश्वामित्राय ऋष्यशृङ्गाय
कौशिकाय गर्ग्याय कौत्साय सनातनपुरुषाय अगस्त्याय शुनलाङ्गूलाय शुनाय शुनपुच्छाय
शौनकाय हारीताय कात्यायनाय जाबालाय पैठीनसाय सुमन्तवे याज्ञवल्क्याय प्रचेतसे
प्रजापतये। अश्विन्यै भरण्यै कृत्तिकायै रोहिण्यै मृगशिरसे आर्द्रायै पुनर्वसवे तिष्यायै अ-
श्लेषायै मघायै पूर्वफाल्गुण्यै उत्तरफाल्गुण्यै ह .यै चित्रायै स्वात्यै विशाखायै अनू-
राधयै ज्येष्ठायै मूलायै पूर्वाषाढायै अभिजिते श्रवणाय धनिष्ठायै शतभिषजे पूर्वभाद्रपदायै
उत्तराभाद्रपदायै रेवत्यै इन्द्राय सुराधिपतये०। १० अग्न्यादित्याभ्या०। ११ चाक्षुषम- छं०
न्वन्तराय रुद्रम० सावर्णि० वैवस्वत० दक्ष० रैवत० सूर्य० तामस० स्वायंभुव० ब्रह्म० स्वा-
रोचिष० हारीत० मनु० धर्ममन्व०। सप्तर्षिमण्डलाय ध्रुवम० भीमभ० सप्त पातालेभ्यः =१

क्रतवे दक्षाय सत्याय वसवे कालाय कामाय ध्वनये रोचकाय पुरूरवाय आर्द्रवाससे आ-
पाय ध्रुवाय सोमाय सावित्र्यै अनलाय नलाय प्रत्यूषाय प्रभासाय प्राग्दिश्यै अग्निदि० द-
क्षिण० नैर्ऋते० प्रतीची० वायव्य० उदीची० ईशान० ऊर्ध्व० अधोदिश्यै । प्राणाय
अपानाय समानाय उदानाय व्यानाय नागाय कूर्माय कृकराय देवदत्ताय धनंजयाय ई-
शानाय पर्जन्याय जयन्ताय इन्द्राय सूर्याय सत्याय भृशाय आकाशाय अग्नये पूष्णे वित-
थाय गृहक्षताय यमाय गन्धर्वाय भृङ्गिराजाय मृगाय पितृगणाय दौवारिकाय सुग्रीवाय पु-
ष्पदन्ताय वरुणाय असुराय शोषाय रोगाय वायवे वासुकाय मुख्याय भल्लाटाय सोमाय सू-
र्याय अदितये दितये अर्यम्णे सवित्रे सावित्रे विवस्वते विबुधाधिपतये जयाय रुद्राय राज-
यक्ष्मणे मित्राय पृथ्वीधराय आपाय आपवत्साय ब्रह्मणे मधुच्छन्दसे आदित्याय रवये ग-
भस्तिने भानवे दिवाकराय धर्माय अधर्माय उपमन्यवे भास्कराय त्वाष्ट्रे स्वर्पतये अर्काय स-
हस्ररश्मयै तप्तकाञ्चनाय त्रिशूलाय घटिकाय एकपादाय सहस्राक्षाय इन्द्राय शतमन्यवे छ-
छ० त्राय अर्घो नमः पुष्पं नमः । धूपदीपवासांसि । दक्षिणान्तं । ततः प्रतिपादयेत् । सावि-
त्राणि० पितुः० तस्य परलोके घुर्घुराख्ये घर्मसंज्ञके देशे अतिवृष्ट्यादिदुःखनिवारणार्थं इ-
८२ द्राय शतमन्यवे छत्रं शोडशकलं सहिरण्यं सवाससं साज्यं रजतमणिमुक्ताकर्पटसाहितं छत्रं द

दानि ३ ॥ सम्पदां भूषणं छत्रं वर्षातपनिवारणम् । अनेन प्रीतिदं यस्मादतः शान्तिं प्रयच्छ मे ॥ इन्द्राय वाचं वद अनायत्वा वाजायत्वेत्यन्तं सूक्तं पठेत् । छत्रं ददानि ३ प्रतिगृह्णामि ३ । क इदं अदात्कस्मा अदात् । ततश्चतुर्वेदेश्वरपृच्छां सम्पाद्य । गायत्र्यै नमः ३ ऋग्यजुर्वेदाय वि० सामवे० तन्न अथर्वणः प्रचोदयात् ३ अद्य तावत् । इन्द्रस्य सानुचरस्य पृथिव्याः अग्नेः आत्मनो० छत्रदाननिमित्तं चतुर्वेदेश्वरपूजनं अछिद्रं सं० ॥ आपन्नोस्मि । नमो ब्रह्मणे । चतुर्वेदेश्वरार्पणं । अग्निमीळे० । ऋग्वेदोथ यजुर्वेदः सामवेदस्तथैव च । अथर्वश्चोपवेदाश्च सषडङ्गपराक्रमाः ॥ ब्रह्मणपृच्छां विसर्जयेत् । गायत्र्यै नमः ३ वज्रपाणये वि० सहस्राक्षाय धी० तन्न इन्द्रः प्र० ३ एकपादाय वि० आतपत्राय धी० तन्नच्छत्रः प्र० ३ इन्द्रस्य शतमन्योः छत्रस्य आत्मनो० पितुः इन्द्रयुतछत्रपूजनमच्छिद्रं । यवोदकं । आपन्नोस्मि । वर्षातपसमायुक्ते पुरे घुर्घुरसंज्ञके । असिपत्रवने घोरे वृष्टिसङ्कर्षणार्तिदे । तं देशं तर्तुमिच्छामि दत्वा छत्रं महीतले । ब्रह्मा विष्णुस्तथा रुद्रा लोकपालः सतारकः ॥ सूर्याः पितृगणैः सार्धं मासाश्च ऋतवस्तथा । ते सर्वे तुष्टिमायान्तु छत्रदानेन शङ्कर ॥ आयुरारोग्यमैश्वर्यं श्रियं छ०
धैर्यं च वैभवम् । छत्रदानेन देवेश सुखं मेस्तु निरर्गलम् ॥ शक्रसूक्तेन वै देव छत्रं देयं सुनिर्मलम् । राजाभिषेकजं मन्त्रं प्रपठेत्पापनाशनम् ॥ छत्रदानात्समं दानं न भूतं न भविष्य- ८३

ति । छत्रदानान्महालक्ष्मीर्निश्चला भवति गृहे ॥ छत्रदानेन राजेन्द्र सज्यं प्राप्नोति मानवः पुत्रपौत्रसमायुक्त इन्द्रतुल्यो नरो भुवि ॥ छत्रदानेन तुष्यन्ति देवाः पितृगणैः सह । गन्धर्वाप्सरसः क्रीडा अग्रे राज्ञा भविष्यति ॥ आह्वानं । नमो ब्रह्मणे उदकलशं ॥

॥ इति छत्रदानविधिः ॥

॥ अथ नौकादानविधिः ॥

आदौ मृद्भस्मगोमयैः० । नौकायै एकविंशतिस्नानं । षोडशस्नानं । तर्पणखण्डं । ऊँनमः देवेभ्य इत्यन्तं छत्रवत्कृत्वा ॥ कुशत्राह्मणे जीवादानं । ऊँगायत्र्यै नमः ३ । नमोस्त्वनन्ताय अपांपतये विद्महे ३ । भास्कराय वि० ३ । नौकायै वि० नदीपरगामिन्यै धी० तन्नो नौका प्र० ३ । अद्य तावत् । जलशायिनः हरेः विशोकस्य शैलेन्द्राणां केशवस्य वरुणस्य वरुणराजस्य जलाधिपतेः पाशहस्तस्य वारुणीसहितस्य । तथा कूर्मस्य मकरस्य मत्स्यस्य मण्डूकस्य शिशुमारस्य कर्कस्य कुलीरस्य नौकायाः आत्मनो० पितुः वैतरणीनदीसन्तरणार्थं विष्णु

नौ० पंचवरुणपूजनं नौकापूजनमर्चा० । षष्ठ्यासनं । जलशायिने हरये विशोकाय शैलेन्द्रेभ्यः केशवाय वरुणायवरुणराजाय जलाधिपतये पाशहस्ताय वारुणीसहिताय । कूर्माय मकराय

८४ मत्स्याय मण्डूकाय शिशुमाराय कर्कराय कुलीराय नौकायै युष्मान्वः पूजयामि । जलशा

73

यिनं हरिं विशोकं शैलेन्द्रान् केशवं वरुणं वरुणराजं जलाधिपतिं पाशहस्तं वारुणीसहितं।
कूर्मं मकरं मत्स्यं मण्डूकं शिशुमारं कुकुरं कुलीरं नौकां आवाहयिष्यामि ॥ आवाहयाम्य-
हं देवं शुद्धं शीतं सुनिर्मलम् । पाशहस्तं प्रचेतसं द्विभुजं मकरासनम् ॥ सर्वतीर्थैश्च सहितं
सर्वतीर्थैरलंकृतम् । नीलकेशयुतं सूक्ष्मं हंसयानं महाबलम् ॥ बहुकाञ्चनमालाढ्यं संस्मरे
मकरासनम् । वरुणाय वरेण्याय धरित्रीधरणाय च ॥ अभ्यन्तराय बाह्याय वारिराशे न-
मोऽस्तु ते ॥ आवाहयाम्यहं नौकां समुद्रतरणक्षमाम् । हेमदण्डयुतां नित्यं पितॄणां मुक्तिहेतवे
ये दिव्या दिव्य० । भगवन्पु० । पाद्यं । आपः क्षीरं । जलशायिन् हरे विशोक शैलेन्द्राः के-
शव वरुण वरुणराज जलाधिपते पाशहस्त वारुणीसहित । कूर्म मकर मत्स्य मण्डूक शि-
शुमार कुकर कुलीर नौके इदं वोऽर्घ्यं नमः ॥ गन्धाद्यपुष्पं पुष्पपूजा । गङ्गायै वितस्तायै य-
मुनायै गोदावर्यै सरस्वत्यै नर्मदायै सिन्धवे कावेर्यै चन्द्रभागायै विपाशायै शतरुद्र्यै मधु-
मत्यै अनन्तनागराजाय कुलिक० तक्षकना० पद्म० महापद्म० कार्कोट० शङ्खपाल० वा-
सुकि० ऐरावताय पुण्डरीकाय वामनाय कुमुदाय अञ्जनाय पुष्पदन्ताय सार्वभौमाय सुप्र- नौ०
तीकाय क्षारसमुद्राय क्षीर० दधि० इक्षु० घृत० सुरा० स्वादूदक । तलाय सुतलाय वित-
लाय रसातलाय तलातलाय अतलाय पातालाय रुद्राय तोयाय जलाय विष्णवे अब्भः पा- ८५

नीयाय सलिलाय वायवे ब्रह्मणे पृथिव्यै अग्नये उमायै शिवाय सूर्याय वामनाय जनक
गोविन्दाय मरुद्धानाय भृगुवे सोमाय श्रियै तीराय कूर्माय मकराय मत्स्याय मण्डूकाय शि-
शुमाराय दुन्दुभाय कुलीराय गन्धमादनाय कूपपर्वताय घण्टालकाय इन्द्राय कण्डूलकाय
वृषभाय धूम्राय चन्द्रमसे अशोकाय विशोकाय द्रोणाय वराहाय चन्दनाय बलाहकाय इ-
न्द्राय वज्रहस्ताय १० अग्न्यादित्याभ्यां ११ अश्विन्यै भरण्यै कृत्तिकायै रोहिण्यै मृगशि-
रसे आर्द्रायै पुनर्वसवे ~.७ जलशायिने हरये विंशेकाय शैलेन्द्रेभ्यः केशवाय वरुणाय व-
रुणराजाय जलाधिपतये पाशहस्ताय वारुणीसहिताय कूर्माय मकराय मत्स्याय दुन्दुभाय
मण्डूकाय शिशुमाराय कुलीराय नौकाय अर्घो नमः पुष्पं नमः ॥ दक्षिणां दत्त्वा प्रतिपा-
दयेत । सावि .णि अद्य तावत् पितुर्वैतरणीनदीसुखसन्तरणार्थं नमामि परया भक्त्या नौ-
कादेवीं महेश्वरीम् । पारसन्तारणार्थाय सद्विप्राय ददाम्यहम् ॥ वरुणरूपाय विष्णवे इमां
नौकां सवस्त्रांसान्नां सहिरण्यां ददानि ३ स्वादोरभक्षवयस इति चन्द्रसूक्तं पठित्वा प्रतिगृ-
०नौ. ह्णामि ३ । अक्षय्यं । अद्य तावत् । आत्मनो० पितुऊनिपाण्मासिके नवमे एकोद्दिष्टश्राद्धे व-
रुणप्रीत्या नौकाप्रीत्या तिलाम्भसा० पृच्छां । गायत्र्यै नमः ३ नमोस्त्वनन्ताय ३ अपां-
८६ पतये ३ भास्कराय वि० ३ नौकायै वि० अद्य तावत् वरुणपूजनं नौकापूजनमच्छिद्रं ।

75

खोदकं । आपन्नोस्मि । कल्पकोटिसहस्राणि महापद्मशतानि च । अयुतं नियुतं चैव स्वर्ग-
लोके वसेत्सुखम् ॥ मानुष्यं पुनरावृत्य चक्रवर्ती नृपो भवेत् । शूरश्च बहुभार्यश्च बहुपुत्रश्च
जायते ॥ धनधान्यसमृद्धश्च नित्यंतृप्तो भवेन्नरः । नौके तारय मे प्रेतं वैतरण्यां सुखेन वै ॥
यथा तस्य व्यथा न स्यात्तथा कुरु जलाधिपे । परलोकहिता त्वं हि तारय घोरसङ्कटात् ॥ नदीनां
तारकद्देवि क्षमां कुरु महेश्वरि ॥ आह्वानं : नमो ब्रह्मणे । उदकलशं । आदौ छत्रदानं ततो
नौकादानं ततो गोप्रदानं ततो गायत्र्यै नमः ब्राह्मणपूजनं कार्यम् ॥ इति नौकादानविधिः ॥

॥ अथ दीपदानविधिः ॥

ओं श्रीपरमात्मने नमः ॥ आदौ ब्रह्मकलशं तद्दक्षिणतोऽष्टौ कलशान्मध्ये प्रतिमाकलशं
संस्थाप्य । अभि नो देवी । वषट्ते विष्णु तावत् । ब्रह्मकलशे तद्विष्णोः० वासुदेवाय० ८ ।
ततो दीपकलशेषु । तत्रादौ (पूर्वे) नवा गुहा चक्रमभूरि दुष्कृतं नाविष्टं वसवो देवहेडनम् ।
मा किन्नो देवा अनृतस्य वर्पसा आसर्वतातिमदितिं वृणीमहे ॥ (दक्षिणे) एवा वसिष्ट इन्द्र-
मूतये नृन्कृष्टीनां वृषभं सोतिगृह्णाति । सहस्रिण उप नो पाहि वाजान्यूयं पातु स्वस्तिभिः
सदा नः ॥ (पश्चिमे) न त्वामग्ने एमहे वसिष्ठ ईशानंसूनो सहसो वसूनाम् । इषां स्तोत्रेभ्यो दी०
मघवद्भ्य आनन्यूगं पातु स्वस्तिभिः सदा नः ॥ (उत्तरे) अपां मीवां सो सविता विषण्वध्व-
८७

सर्वतातिमदितिं वृणीमहे ।।
रीय इद॒ऽपसेधतिविन्द्रियाः । ग्रावा यत्र मधुषु दुह्यते बृहदाऽऽसर्वतातिमदितिं वृणीमहे ।। अग्नि सप्ति । (नैर्ऋते) यमो
(मध्ये कर्णिकायां) तेजोसि शुक्रमसि० । (आग्नेये) इन्द्रा पर्वता । अग्नि सप्ति । (नैर्ऋते) यमो
दधार । यन्ते देवी । (वायव्ये) उदुत्तमं । वायवायाहि । (ईशाने) सोमो धेनुं । ईशानं त्वा ।
(पूर्वे) सीतायै नमः राघवाय नमः लक्ष्मणाय । (दक्षिणे) रुद्राय दाक्षायिण्यै । (पश्चिमे)
[illegible] छायायै । (उत्तरे) चन्द्रमसे रोहिण्यै । (आग्नेये) इन्द्राय अग्नये । (नैर्ऋते) यमाय
नैर्ऋतये । (वायव्ये) वरुणाय मरुते । (ईशाने) धनदाय ईशानाय । (मध्ये) ज्वालायुताय
दीपराजाय अनन्तबाहुचरणशिरोन्मुखाय । क्षेत्रस्य पतिना । तजाय चण्डाय । ऐन्द्राग्नं ।।
अ नाभौ । पुरुषसूक्तेनच ।। तीर्थे स्वेयं । अद्य तावत् महागणपतये वासुदेवाय ८ पूर्वे सीता
युताय राघवाय सलक्ष्मणाय । दक्षिणे दाक्षायिणीयुताय रुद्राय । पश्चिमे छायायुताय दि
वाकराय । उत्तरे रोहिणीयुताय चन्द्रमसे । आग्नेये इन्द्राग्निभ्यां । नैर्ऋते यमनैर्ऋतिभ्यां
वायव्ये पाशिमरुद्भ्यां । ईशाने धनदशङ्कराभ्यां । मध्ये कर्णिकायां ज्वलायुताय दीपराजा
८.० अनन्तशिशिरोन्मुखाय अनन्तबहुचरणाय कान्तासहिताय माधवाय क्रियासहिताय गोवि
न्दाय पित्रे विष्णवे दीपश्राद्धनिमित्त धूपो दीपः ।। ततो दीपान्परिकल्पयेत् । तत्रादौ (पूर्वे
८८ स्वप्रकाशो० । यत्रास्ति माता० ।। यस्मिल्लोके निरालोके न सूर्यो नापि चन्द्रमाः । तमहं त

तुमिच्छामि दीपं दत्त्वा जनार्दन ॥ तस्य शून्यरूपस्य यामे मार्गे प्रयासतः । तमोन्धकार-
सन्देहंनाशयाशु जनार्दन ॥ प्रेतस्य वायुरूपस्य यामे मार्गे यियासतः । क्षिप्रं नाशय मोहा-
न्ध्यं वालनेत्र नमोस्तु ते ॥ यामैः पार्श्वविकृष्टस्य प्रेतस्य प्रथि यास्यतः । ज्वालासंस्थे महा-
लक्ष्मि तमोन्ध्यं नाशयाशु मे ॥ भगवन्देवदेवेश शङ्खचक्रगदाधर । राघवाख्यं महादीपं
लक्ष्मणेन समन्वितम् ॥ सीतया सहितश्चैव प्रेतलोके हिताय वै । अर्पयामि महाबाहो तव
हस्ते जनार्दन ॥ अद्य तावत् पितुर्विष्णोस्तस्य परलोके प्रकाशवृद्ध्यर्थं नानायोनि भ्रमणरूप-
महामोहान्धकारनिवारणार्थं कान्तासहितस्य माधवस्य क्रियासहितस्य गोविन्दस्य प्रीत्यर्थं
पूर्वे सीतायुतराघवसलक्ष्मणदीपं सान्नं परिकल्पयामि नमः ॥ १ ॥ (दक्षिणे) स्वप्रकाशो०
यत्रास्ति माता० । यस्मिंल्लोके० । प्रेतस्य शून्यरूपस्य० । प्रेतस्य वायुरूपस्य० । यामैः पा-
र्श्वे० । भगवन्देवदेवेश दाक्षायणीयुतं शुभम् । रुद्राख्यं च महादीपं प्रेतलोके हिताय च ।
अर्पयामि महाबाहो तव हस्ते जनार्दन ॥ अद्य तावत् पितुर्विष्णोः० कान्तासहितस्य० द-
क्षिणे दाक्षायणीयुतरुद्रदीपं सान्नं परिकल्पयामि नमः ॥ (पश्चिमे) स्वप्रकाशो० । भगव- दी०
न्देवदेवेश दीपं दिवाकराभिधम् । सच्छायं प्रेतलोकेऽस्य प्रेतस्य हि हिताय वै । अर्पयामि० ॥
अद्य तावत् पितुर्विष्णोः० पश्चिमे छायायुतदिवाकरदीपं परिक० ॥ (उत्तरे) स्वप्रकाशो० । ८६

भगवन्देवदेवेश दीपं च रोहिणीयुतम् । चन्द्रमोनाम प्रेतस्य परलोके हिताय वै । अर्पयामि
अद्य तावत्० उत्तरे रोहिणीयुतचन्द्रमोदीपं सान्नं परिक० ।। (आग्नेये) स्वप्रकाशो० भगव
न्सर्वतत्त्वज्ञ इन्द्राग्न्याख्यसुदीपकम् । अर्पयामि० ।। आग्नेये इन्द्राग्निदीपं सान्नं परिक० ।
(नैर्ऋते) स्वप्रकाशो० भगवन्सर्वतत्त्वज्ञ यमनैर्ऋतिनामकम् । अर्पयामि महाबाहो० ।। नैर्ऋ
ते यमनैर्ऋतिदीपं सान्नं परि० ।। (वायव्ये) स्वप्रकाशो० भगवन्देवदेवेश पाशमारुतदी
पकम् । अर्पयामि० ।। वायव्ये पाशिमरुद्दीपं सान्नं परिक० ।। (ईशाने) स्वप्रकाशो० भग
न्देवदेवेश धनदशङ्कराभिधम् । अर्पयामि० ईशाने धनदशङ्करदीपं सान्नं परिक० ।। (म
रत्नदीपे) नमोस्तु रामाय सलक्ष्मणाय देव्यै च तस्यै जनकात्मजायै । नमोस्तु रुद्रेन्द्रय
नलेभ्यो नमोस्तु चन्द्रार्कमरुद्गणेभ्यः ।। ज्वलायुतं परमभूषणभूषिताङ्गं नानाभिधानयातं
वितदीपराजम् । सङ्कल्पयामिपरलोकनिवासिप्रेतघोरान्धकारशमनाय प्रकाशरूपम् ।। स्व
काशो० । नमः पितृभ्यः० । यज्ज्योतिः परमं लोके तमोमोह निवारणम् । तज्ज्योतिर्दे
दी० रूपेण दीपोयं परिकल्पितः ।। बिन्दुनादकलातीतं भजामि स्वर्णवर्त्तिकम् । रौप्यपात्ररतं
जो महामोहान्ध्यनाशनम् ।। अद्य तावत्० पितुर्विष्णोस्तस्य परलोके प्रकाशवृद्ध्यर्थं घ
६० (मध्ये कर्णिकायां) ज्योतीरूपं दीपराजं रत्नदीपं परिकल्पयामि नमः ।। ततो विष्णोः पु

79

क्षिपेत् । यत्रावकाशं लभते न दीपो न चन्द्रमा नाग्निविभावसू वा । च्छेद्यं . यत्सर्वमणिप्र-
काशैस्तदन्तरान्ध्यं कुरु कृष्ण दूरम् ॥ ततोऽश्विनौ इति जीवादानम् । ततो देवस्य न्यासः
...र्ति गायत्र्यै नमः ३ सर्वा विष्णुगायत्रीः ३ स्वप्रकाशाय विद्महे ज्योतीरूपाय धीमहि तन्नः
...काशः प्रचोदयात् ३ अद्य तावत् महागणपतेः० ऋतुपतेर्नारायणस्य वासुदेवस्य = (पूर्वे)
सीतायुतस्य राघवस्य सलक्ष्मणस्य । (दक्षिणे) दाक्षायणीयुतस्य रुद्रस्य । (पश्चिमे) च्छा-
यायुतस्य दिवाकरस्य । (उत्तरे) रोहिणीयुतस्य चन्द्रमसः । इन्द्राग्न्योः यमनैर्ऋत्योः पा-
शिमरुतोः धनदशङ्करयोः अनन्तबाहुचरणशिरोमुखस्य ज्वालायुतस्य दीपराजस्य कान्ता-
सहितस्य माधवस्य । क्रियासहितस्य गोविन्दस्य तेजस्य चण्डस्य आत्मनो० पितुर्विष्णोः
...न्नदीपश्राद्धनिमित्तं तस्य परलोके प्रकाशवृद्ध्यर्थं० प्रकाशरूपनारायणप्रीत्यर्थं विष्णुपू०
कलशपू० दीपराजपूजनमर्चामहं करिष्ये । पुरुष एव ध्रुवा द्यौरित्यासनम् ॥ महागणपतये
सीतायुताय राघवाय सलक्ष्मणाय । दाक्षायणीयुताय रुद्राय । च्छायायुताय दिवाकराय ।
रोहिणीयुताय चन्द्रमसे । इन्द्राग्निभ्यां यमनैर्ऋतिभ्यां पाशिमरुद्भ्यां धनदशङ्कराभ्यां अन-
न्तबाहुचरणशिरोमुखाय ज्वालायुताय दीपराजाय कान्तासहिताय माधवाय । क्रियासहि- दी०
ताय गोविन्दाय तेजाय चण्डाय युष्मान्वः पूजयामि । महगणपतिं० सीतायुतं राघवं स- ६१

लक्ष्मणं दाक्षायणीयुतं रुद्रं छायायुतं दिवाकरं रोहिणीयुतं चन्द्रमसं इन्द्राग्नी यमनैर्ऋती
पाशमरुतौ धनदशङ्करौ अनन्तबाहुचरणशिरोमुखं ज्वालायुतं दीपराजं कान्तासहितं मा-
धवं श्रियासहितं गोविन्दं तेजं चण्डं आवाहयिष्यामि ॥ आवाहनं विष्णोः ॥ आवाहया-
म्यमर० । अनादिनिधनं देवं सकिरीटकमण्डलम् । शङ्खचक्रगदापद्मवनमालाविभूषितम् ।
चतुर्भुजं कृष्णवर्णं धात्रीचरणनव्ययगम् । देवमावाहये विष्णुं निष्कृत्यर्थं पितॄन्सदा ॥ दी-
पकलशेषु तत्रादौ (पूर्वे) आवाहयामि विबुधार्चितपादपीठं श्रीराघवं रघुवरं कमनीयरूपम् ।
सीतायुतं सकललोकनुतं वरेण्यं घोरान्धकारशमनाय प्रकाशरूपम् ॥ आवाहयाम्यहं देवं
राघवं सीतया युतम् । सलक्ष्मणं चतुर्बाहुं नानालङ्कारभूषितम् ॥ तेजोरूपं सदाकान्तं का-
न्तया सहितं विभुम् । परलोकगतस्याद्य प्रेतस्य मुक्तिहेतवे श्यामवर्णो० प्रतद्विष्णु० ।
[दक्षिणे] आवाहयामि गणसेवितपादपीठं तेजोमयं तपनवह्निशशाङ्कनेत्रम् । दाक्षायणीयु-
ततनुं वृषभाधिरूढं घोरान्धकारशमनाय प्रकाशरूपम् ॥ आवाहयाम्यहं रुद्रं दाक्षायण्या
दी० समन्वितम् । घोरमोहान्ध्यशमनं परलोके प्रकाशकम् ॥ शुक्लवर्णो० योरुद्रो० [पश्चिमे]
आवाहयामि सुरसेवितपादयुग्मं तेजोनिधिं दशशतैः किरणैरुपेतम् । छायायुतं मनुजवृन्द-
६२ सुरैर्नमस्यं घोरान्धकार० ॥ आवाहयाम्यहं देवं छायायुक्तं दिवाकरम् । मोहान्धकारशमनं

परलोके प्रकाशदम् ॥ रक्तवर्णो० । आ कृष्णेन० । उत्तरे । आवाहयामि मुनिवन्दितपादयुग्मं तारापतिममृतरूपकलानिधानम् । श्रीरोहिणीयुततनुममरेशवन्द्यं घोरान्धका० । आवाहयाम्यहं चन्द्रं रोहिण्याश्लिष्टमादरात् । निशायामपि तामिस्रहस्तिनो हनने हरिम् । शुक्लवर्णो० । याते धामानि० ॥ आग्नेय । आवाहयामि वरदाविन्द्राग्नी दीपसंज्ञकौ । नानातेजोभिः संयुक्तौ सर्वदेवनमस्कृतौ ॥ परलोकगतस्याद्य प्रेतस्य मुक्तिदायिनौ ॥ आवाहयामि त्रिदशार्चितपादयुग्ममिन्द्रं गजाधिपगतं सुरलोकनाथम् । वह्निं च विश्वजनपापप्रसूदनं तं घोरान्ध० ॥ नैर्ऋते । आवाहयामि लोकेशौ यमनैर्ऋतिसंज्ञकौ । यमानियमसंयुक्तौ दीपरूपौ मनोरमौ । परलोकग० । आवाहयामि महिपाश्रितपादपीठं शान्तं समस्तजनताहरणप्रभावम् । रक्षोधिपं च रमणीयजटाकलापं घोरान्ध० ॥ वायवे । आवाहयामि लोकेशौ वायव्यां दीपसं॰ ॥ । जलप्राणाधिपौ देवौ पाशिमारुतसंज्ञकौ ॥ परलोक० ॥ आवाहयामि वरुणं वरुणाधिपं तं श्रीवारुणीयुततनुं मकराधिरूढम् । वायुं च सर्वगतपावितविश्वरूपं घोरान्ध० ॥ ईशाने । आवाहयामि देवेशौ पूज्यौ धनदशङ्करौ । दीपरूपधरौ शान्तौ तेजोभिः परिमण्डितौ । परलोक० ॥ आवाहयामि धनदं प्रमथेशभृत्यं यानासनं निधिपतिं गुह्यकादिवन्द्यम् । श्रीशङ्करं च विबुधेशनुतं वरेण्यं घोरान्ध० ॥ कर्णिकायां ॥ दी०

आवाहयामि बहुपादभुजोदराढ्यं श्रीवत्समण्डिततनुं बहुवक्त्रयुक्तम् । ज्वालायुतं सकलम-
ध्यविराजमानं घोरान्ध० ॥ क्षेत्रपालेषु ॥ आवाहयामि क्षेत्रेशौ तेजचण्डौ महाधियौ । शूरौ
सर्वगतौ सिद्धौ प्रेतस्यास्य विमुक्तये ॥ भगवन्पुण्डरीकाक्ष० ॥ दाक्षिणान्तं । वैश्वदेवादि नि-
त्यकर्म कृत्वा । अपसव्येन । दीपानां बलिः । राघवाद्या महादीपाः प्रेतलोके प्रकाशदाः ।
आपूपा मीनसंयुक्ता गृह्णध्वं प्रेतमुक्तये ॥ ततः स्वपितरं श्रीविष्णुं च ध्यात्वा दीपश्राद्धमा-
रभेत । सव्येनाचम्य ॥ सीतायुतं रामचन्द्रं लक्ष्मणेन युतं तथा । दाक्षायणीयुतं रुद्रं च्छा-
यायुक्तं दिवाकरम् ॥ रोहिणीसहितं चन्द्रं श्रीविष्णुं रुक्मिणीयुतम् । ततः क्रमेण दिक्पा-
लानिन्द्राग्नी यमनैर्ऋती । पाशिनं मरुतं चैव तथा धनदशंकरौ । अनन्तबाहुचरणमनन्तं शि-
शिरोन्मुखम् । सकान्तं माधवं चैव ज्वालायुक्तं समप्रभम् । विष्णुं गदाधरं शङ्खचक्रहस्तं
श्रियायुतम् । ध्यात्वा स्वं पितरं दीपश्राद्धारम्भो विधीयते ॥ सव्येनाचम्य । ॐ भूः पुरुष-
मावाहयामि नमः० ३ । नमोस्त्वनन्ताय० ३ । सर्वा विष्णुगायत्रीः ॥ अद्य तावत् का-
दी० न्तासहितस्य माधवस्य क्रियासहितस्य गोविन्दस्य पितुर्विष्णोस्तस्य परलोके प्रकाशवृद्ध्य-
र्थं घोरान्धकारनिवारणार्थं प्रकाशरूपनारायणप्रीत्यर्थं दीपश्राद्धमहं करिष्ये ॥ तिलसर्षपय-
९४ वान्विकीर्य । कान्तासहितस्य० पितुर्विष्णोः दीपश्राद्धनिमित्त इदमासनं नमः । कान्तास-

हिताय० पित्रे विष्णवे दीपश्राद्धनिमित्ते त्वां पूजयामि कान्तासहितं० पितरं विष्णुमावाहयिष्यामि। यवान्विकीर्य ।। शन्नोदेवी० । लाजाश्च० । पाद्यार्घगन्धपुष्पधूपदीपाः कान्तासहिताय० पित्रे विष्णवे इदमन्नं शृतमभिघार्य । प्रक्षाल्याग्रतो मेत्तरां । प्रणवं मनसा ध्यात्वा० ॐ २ क्षीरं घृतमासिच्य । कान्तास० पित्रे विष्णवे दीपश्राद्धनिमित्ते अन्नं नमः २ अन्नं मधु २ पृथिव्यै नमः विष्णवे नमः विष्णो इदं रक्षस्व । यथोपस्थितं दत्तं अमृतमन्नं नमः । नमो देवेभ्यः । अमृतेन सह भोक्तव्यमसुरा निवर्तन्तां विष्णवादः कारणा आगच्छन्तु पिण्डं वर्ज्यं । पाथेयं पिण्डस्थानेसमर्पयेत् दीपाग्रे सव्यञ्जनमन्नं प्रकल्पयेत् ततो भक्ष्यभोज्यबलिः । तिलमधुमिश्रं हिमपानं नम इत्यादि । आचम्य । वसन्ताय नमः० ततश्चण्डीबलिः चण्ड्यै महालक्ष्म्यै नमो नैवेद्यं निवेदयामि नमः । सान्नं दीपश्राद्धं कश्चित्सम्पन्नं भोः सुसम्पन्नं तृप्यतु भवान् तृप्तोऽस्मि प्रेतस्तृप्यतु ।। मित्रभृत्यजनैः सार्धं पश्चाद् भुञ्जीत वाग्यतः । तृप्तानाचम्य । पित्रे आचमनीयं । शन्नो देवी० । दक्षिणायै० । नाक्षय्यं । क्षेत्रशबलिः । ततः प्रतिमाया दीपराजानां च पृच्छां सम्पाद्य । ॐभूः पुरुषं ३ नमोस्त्वनन्ताय २ वासुदेवाय० ३ जितन्ते० ३ नमः कारण० ३ विश्वरूपाय० ३ नरसिंहाय० ३ अद्य तावत् कान्तास० वासुदेवस्य ८ पूर्वे सीतायुतस्य राघवस्य सलक्ष्मणस्य दक्षिणे दाक्षायणीयुतस्य रुद्रस्य पश्चिमे च्छायायुतस्य दि- दी०

वाकरस्य उत्तरे रोहिणीयुतस्य चन्द्रमसः इन्द्राग्न्योः यमनैर्ऋतयो पाशिमरुतोः धनदशङ्क-
रयोः अनन्तबाहुचरणशिरोन्मुखस्य ज्वालायुतस्य दीपराजस्य कान्तासहित० तेजस्य च-
ण्डस्य यवोदकं नमः ॥ आपन्नोस्मि० ध्येयः सदा० । प्रसीद भगवन्विष्णो प्रसीद पुरुषो-
त्तम । प्रसीद देवदेवेश प्रसीद गरुडध्वज ॥ नमः कमलनाभाय नमः कैटभसूदन । लोक-
नाथ नमस्तेस्तु वीरभद्र नमो नमः ॥ नमः कृष्णाय रामाय नमश्चक्रायुधाय च । नमः क-
मलनेत्राय नमः कमलमालिने ॥ अथ पूर्वे । यत्सन्निधानेन विना जगत्स्यादसत्खपुष्पेण स-
मं समग्रम् । तथापि न स्यात्किमुतान्ध्यरूपं तं स्वप्रकाशं प्रनतोस्मि देवम् ॥ दक्षिणे । ज-
ले स्थले वा दिवि भूतले वा बुधेऽबुधेवाप्यजडे जडे वा । सर्वत्र यत्स्यादवभासमानं समग्र-
मं तं प्रनतोस्मि देवम् ॥ पश्चिमे । विकारिषु स्थावरजङ्गमेषु भावेषु दृश्येषु न दृश्यमानम् ।
विश्रान्तरालस्थमरालवृत्तमनन्तमाद्यं प्रनतोस्मि देवम् ॥ उत्तरे । शान्तं सुसौम्यं त्रिपुटीवहि-
स्थं द्रष्टारमाद्यं पुरुषं पुराणम् । सर्वस्य दातारमनन्तवीर्यमात्मानमीशं प्रणतोस्मि देवम् ॥
दी० मध्ये । सहस्रशीर्षाननबाहुपादं मोहापहं दीप्ततया समन्तात् । स्थितं जगत्पद्मसुकर्णिकायां
ज्वालायुतं तं प्रणतोस्मि देवम् ॥ पुनः पूर्वे । मोहान्धकारप्रशमं प्रदीपं नतोस्मि विष्णुं त्रि-
९६ दिवेशतुल्यम् । शचीयुतो वज्रधरो महेन्द्राकारेण यः पाति पुरन्दराशाम् ॥ आग्नेये

मोहान्धकारप्रशमं प्रदीपं नतोस्मि विष्णुं त्रिदिवेशरूपम् । तेजःपतिर्वह्निदिशं सदा यः
स्वाहापतिः याति हुताशरूपः । दक्षिणे । घोरान्धकारप्रशमं प्रदीपं नतोस्मि विष्णुं च
यमस्वरूपम् । प्रेताधिपो दण्डधरः स्वशक्त्या यात्यार्चितो ह्यन्तकृद्दक्षिणाशाम् । नैर्ऋते ।
घोरान्धकारप्रशमं प्रदीपं नातोस्मि विष्णुं निर्ऋतिस्वरूपम् । रक्षोधिपः खड्गधरः स्वश-
क्त्या यात्यर्चितो दक्षिणपश्चिमां यः । पश्चिमे । घोरान्धकारप्रशमं प्रदीपं नतोस्मि विष्णुं
वरुणस्वरूपम् । जलाधिपः पाशयुतः प्रतीचीं यः पाति वारुण्यधिपो दयालुः । वायवे ।
घोरान्धकारप्रशमं प्रदीपं नतोस्मि विष्णुं श्वसनस्वरूपम् । प्राणाधिपः शक्तिधरः कर-
स्थध्वजो दिशं पाति सदागतिर्यः । उत्तरे । घोरान्धकारप्रशमं प्रदीपं नतोस्मि विष्णुं
धनदस्वरूपम् । गदायुधो यक्षपतिर्दिशं यः पात्युत्तरामुत्पलनेत्रधारी । ईशाने । घोरान्ध-
कारप्रशमं प्रदीपं नतोऽस्मि विष्णुं गिरिशस्वरूपम् । सर्वाधिपः शूलधरो दिशं यः पू-
र्वोत्तरां पाति गणैः समर्च्यः । पुनःपूर्वे । सीतायुतं नौमि सलक्ष्मणं त्वां तेजोमयं राघवमर्च्यमै-
न्द्र्याम् । यद्दुष्कृतं स्यान्नवरन्ध्रजातं तत्सर्वमान्ध्यं क्षपयाशु विष्णो । दक्षिणे । दाक्षायुणी- दी०
युक्तमहं प्रपद्ये तां रुद्रमर्काग्निशशांकनेत्रम् । यद्दुष्कृतं० । पश्चिमे । छायायुतं नौमि दिवाकरं त्वा-
मर्च्यं प्रतीच्यां त्रिजगत्प्रकाशम् यद्दुष्कृतं० । उत्तरे । त्वां रोहिणीयुक्तमहं प्रपद्ये प्रपूजितं चन्द्रम- ६७

थोत्तरस्याम् । यद्दुष्कृतं० । मध्ये । यस्मिन्न सूर्यो न च चन्द्रमाः स्यान्मार्गे विलोके च नि-
राश्रयत्वम् । तद्रक्षणार्थमवलम्भनं मे प्रकाशरूपः खलु वासुदेवः ॥ यत्रावकाशं लभते न
दीपो न चन्द्रमा नाग्निविभावसू वा । छेद्यं न यत्सर्वमणिप्रकाशैस्तदन्तराध्यं कुरु कृष्ण
दूरम् ॥ त्वमेव पापहा देवो मुक्तिदः पुण्यदः सदा । कान्तिदः पुष्टिदश्चैव कीर्तिदः सख-
दस्तथा ॥ इह लोके परत्रापि रक्षको भव केशव । भवतामग्रतो दीपप्रकाशो नाम कल्पि-
तः ॥ प्रकाशरूपो विश्वात्मा प्रीतोस्मै भव केशव । ततस्तु राजते पात्रे दीपं प्रज्वाल्यते
पुनः । सुवर्णमिश्रितक्षौमवर्त्या कुम्भोपरि स्थितः ॥ क्षमस्व मम दीप त्वं शम्भोर्नेत्रसमु-
द्भव । तावच्छिवपुरीं गच्छ यावत्प्रज्वाल्यते पुनः ॥ इमा गाथाः पठित्वा तु दीपराजः सुकु
म्भकः । प्रकाशरूपो विश्वात्मा प्रेतोस्मै भव केशव ॥ क्षमेतां चेत्रपा... वां नानासिद्धिप्र-
दायकौ । नानालङ्कारसंयुक्तौ गच्छेतां स्वगृहं प्रति ॥ आह्वानं० । नमो ब्रह्मणे० । ततो दी-
पकलशौ सान्नौ पूर्वादितो यथाक्रमं ब्रह्मणा प्रतिपादयेत् ॥ सावित्राणि अद्यतावत् का-
दी० न्तास० माधवस्य क्रियास० गोविन्दस्य पितुर्विष्णोस्तस्य परलोके प्रकाशवृद्ध्यर्थं मोहान्ध-
० कारनिवारणार्थं पूर्वं सीतायुतराघवसलक्ष्मणदीपं सकलशं सहिरण्यं सवाससं सान्नं ददा-
६८ नि ३ प्रतिगृह्णामि । एवं दक्षिणपश्चिमोत्तराग्नेयनैर्ऋतवायव्यैशानकलशान्प्रतिपादयेत्

ततो होत्रे प्रतिमां प्रतिपादयेत् । सावित्राणि अद्य तावत् कान्तास० माधवस्य क्रियास० गोविन्दस्य पितुर्विष्णोस्तस्य परलोके प्रकाशत्वप्रत्यर्थं मध्ये कर्णिकायामनन्तशिरोमुखज्वालायुतविष्णुप्रतिमां सहिरण्यां सवाससं सान्नां मणिमुक्ताफलोपेतां छत्रचामरव्यजनादर्शसहितां ददानि ३ प्रतिगृह्णामि । ततोऽक्षय्यं देयं । कान्तासहिताय माधवाय क्रियासहिताय गोविन्दाय पित्रे विष्णवे दीपश्राद्धनिमित्ते दत्तमन्नमक्षयमस्तु स्वधा नमः ॥ ततो ब्राह्मणपृच्छां सम्पादयेत् ॥ ओंभूःपुरुषं विसर्जयामि० अद्य तावत् कान्तस० माधवस्य० ब्राह्मणपूजनमच्छिद्रमस्तु एवमस्तु ॥ कान्तास० माधवाय पित्रे विष्णवे दीपश्राद्धनिमित्ते तिलोदकं नमः उदकतर्पणं नमः । ततो गोग्रासादि । पात्राणि चालयेत् । उदकलशं । मन्त्रार्थाः । इति दीपश्राद्धविधिः ॥

॥ ॐ अथ लोकतर्पणम् ॥

गृत्समदस्य गायत्री । विश्वेदेवास आगत शृणुताम इमं हवम् । इदं बर्हिर्निषीदत ॥ दी०

ब्रह्मा तृप्यतां, विष्णुः, रुद्रः, प्रजापतिः, छन्दांसि तृप्यन्तां, वेदाः, ऋषयः, आचार्याः, ००१

इतराचार्याः, तपोधनाः, संवत्सराः सावयवाः, देवाः, अप्सरसः, देवानुगाः नागाः, ९९

सागराः, पर्वताः, सरितः, मनुष्याः यक्षाः, रक्षांसि, पिशाचाः सुपर्णाः, भूतानि, पशु-

वाः,वनस्पतयः, ओषधयः, भूतग्रामाश्चतुर्विधाः, असुराः, क्रूराः, सर्पाः, जम्बुकाः, ख
गाः, विद्याधराः, जलाधाराः, निराधाराः, पापधर्मरताः, सर्वग्रहाः, यमः, धर्मराजः
मृत्युः, अन्तकः, वैवस्वतः, कालः, सर्वप्राणहरः, औडम्बरः, नीलः, ब्रध्नः, परमेष्ठिः
वृकोदरः, भीमः, चित्रः, चित्रगुप्तः ॥ * ब्रह्मा विष्णुश्च रुद्रश्च ईश्वरश्च सदाशिवः । भैर
वाश्च चतुष्यष्टिर्मातरो लोकपा गणाः ॥ सप्तसागरपर्यन्तं खेचर्यो मन्त्रनायकाः । नागा न
द्यश्चद्वीपाश्च पर्वताश्च महाद्रुमाः ॥ ऋषयो देवताश्चैव दिवाचरनिशाचराः । सिद्धा विद्य
धरा यक्षा दैत्यदानवराक्षसाः ॥ अण्डजाः स्वेदजाश्चैव उद्भिजा योनिजास्तथा । मुहूर्त
दिवसाः पक्षा मासाः संवत्सरा युगाः । तृप्तिमेते प्रयान्त्वाशु मया दत्तोदकैः शुभैः ॥
ओंनमो ब्रह्मणे चैव आचार्येभ्यो नमो नमः । ऋषिभ्यश्च समस्तेभ्यो देवेभ्यश्च नमो
नमः ॥ देवताभ्यो वायुभ्यश्च मृत्यवे च नमो नमः । विष्णवे च नमस्तुभ्यं नमो वैश्रव
नाय च ॥ नमोस्तु चोपजाताय नमो जलाधिराशये । अग्निः प्रजापतिश्चैव विश्वेदेवाश्च
श्लो० तृप्यताम् ॥ ओंकारं तर्पयामीति महाव्याहृतयस्तथा । गायत्री देवऋषयच्छन्दांसि तृप्यत
तथा ॥ यज्ञो द्यावापृथिव्यौ च अहोरात्रं च तृप्यताम् । अन्तरिक्षं समुद्राश्च नद्यस्तृप्य
१०० न्तु सर्वदा ॥ क्षेत्रौषध्यो वनस्पत्यो नागा गावो वनानि च । तृप्यन्तां वसवो रुद्रा आ

दित्याः सिद्ध एवच ॥ महर्षयः कश्यपाद्याः प्रेता भूतगणास्तथा । साध्या भूतानि तृप्य-
न्तां पिशाचा यक्षराक्षसाः ॥ एवमन्ये च मुनयः स्वस्ति कुर्वन्तु तर्पिताः । ओंनमो त्रयक्ष-
णेतुभ्यं कालाय च महात्मने ॥ नमस्तेस्तु निमेषाय तुटये च नमो नमः । लवाय च
नमो नित्यं नमस्तेऽस्तु क्षणाय च ॥ नमो नमस्ते काष्टायै कालाय च नमो नमः ।
नाडिकायै सुसूक्ष्मायै मुहूर्त्ताय नमो नमः ॥ नमो निशाभ्यः पुण्येभ्यो दिवसेभ्यो नमो
नमः । नमः पक्षाभ्यां मासेभ्य ऋतुभ्यः षड्भ्य एवच । अयनाभ्यां विषुवद्भ्यां वत्सरेभ्यो
नमो नमः । नमः कृतयुगादिभ्यो ग्रहेभ्यश्च नमो नमः ॥ अष्टाविंशतिसंख्येभ्यो न-
क्षत्रेभ्यो नमो नमः । राशिभ्यः करणेभ्यश्च व्यतीपातेभ्य एवच ॥ प्रतिवर्षाधिपेभ्यश्च
विज्ञानाय नमो नमः । नमोऽस्तु कुलनागेभ्यः सानुरागेभ्य एवच ॥ नमश्चतुर्दशेभ्यश्च
मन्वन्तरेभ्य एवच । नमः पुरन्दरेभ्यश्च तत्सङ्गेभ्यो नमो नमः ॥ पञ्चाशद्भ्यो नमो नित्यं
दक्षकन्याभ्य एवच । नमो देव्यै सुप्रभायै जयायै च नमो नमः ॥ कृपाश्वाय कश्यपाय श्लो०
नमस्ते जनकाय च । नमोस्तु बहुपुत्राय पत्नीभिः सहिताय च ॥ नमो बुद्ध्यै नमो वृ-
द्ध्यै निद्रायै धनदाय च । नडकूवरयक्षाय गुह्यकस्वामिने नमः ॥ नमोस्तु शङ्खपद्माभ्यां १०१
निधिभ्यामथ नित्यशः । भद्रकाल्यै नमस्तुभ्यं सप्तद्वीपेभ्य एवच ॥ सप्तभ्यश्च समुद्रेभ्यः

पर्वतेभ्यो नमो नमः । उत्तरेभ्यः कुरुभ्यश्च नमो हिरण्यबाहवे ॥ भद्राश्वकेतुमालाभ्यां
नमः सर्वत्र सर्वदा । नम इलावृतायैव हरिवर्षाय वै नमः ॥ नमः किंपुरुषेभ्यश्च भारता-
य नमो नमः । नमो भारतभेदेभ्य आर्यावर्तेभ्य एवच ॥ पातालेभ्यश्च सप्तभ्यो नर-
केभ्यो नमो नमः । कालाग्निरुद्रशेषाभ्यां हरये क्रोधरूपिणे ॥ नमः सप्तभ्यो लोकेभ्यो
महाभूतेभ्य एवच । नमस्ते बुद्धये चैव नमः प्रकृतये तथा ॥ पुरुषायाभिमानाय नम-
स्तेऽव्यक्तमूर्त्तये । हिमवत्प्रमुखेभ्यश्च पर्वतेभ्यो नमो नमः ॥ पुराणेभ्यश्च गङ्गाभ्यः
सप्तभ्यश्च नमो नमः । नमोस्तु द्युतनेभ्यश्च सप्तभ्यश्च नमो नमः ॥ नमोस्तु पुष्क-
रादिभ्यस्तीर्थेभ्यश्च नमो नमः । निम्नगाभ्यो नमो नित्यं वितस्तायै नमो नमः ॥ च-
तुर्दशभ्यो देवेभ्यो दानवेभ्यो नमो नमः । नमस्त्वथोच्चैःश्रवसे ध्रुवाय च नमो नमः ॥
नमोस्तु धान्वन्तरये शास्त्रार्थेभ्यो नमो नमः । विनायककुमाराभ्यां विघ्नेशाय नमो न-
मः ॥ सशाखाय विशाखाय नैगमाय नमो नमः । नमः स्कन्दग्रहेभ्यश्च स्कन्दमातृ-
श्लो० भ्य एवच ॥ ज्वराय रोगपतये भस्मप्रहरणाय च । ऋषिभ्यो बालखिल्येभ्यः कश्यपाय
नमो नमः । अगस्त्याय नारदाय व्यासादिभ्यो नमो नमः ॥ अप्सरोभ्यः सोमपेभ्यो
१०२ देवेभ्यश्च नमो नमः । त्रयस्त्रिंशत्सोमपेभ्यस्तुषितेभ्यो नमो नमः ॥ आदित्येभ्यो न-

भ्यो नित्यं द्वादशेभ्यो नमो नमः । एकादशेभ्यो रुद्रेभ्यः सगणेभ्यो नमो नमः ॥ द-
शभ्यो विश्वेदेवेभ्यः पुण्येभ्योथ नमो नमः । नमो वसुभ्यस्तुष्टेभ्यो दिव्ययोगिभ्य ए-
वच ॥ द्वादशेभ्यो भृगुभ्यश्च नमः सर्वत्र सर्वदा । दशभ्योङ्गिरसेभ्यश्च तपस्विभ्यो
नमो नमः ॥ नमो नासत्यदस्राभ्यमश्विभ्यां च नमो नमः । साध्येभ्यो द्वादशेभ्यश्च
पुराएयेभ्यो नमो नमः ॥ एकोनपञ्चाशद्भ्यश्च मरुद्भ्यश्च नमो नमः । शिल्पाचार्याय दे-
वाय नमस्ते विश्वकर्मणे ॥ अष्टभ्यो लोकपालेभ्यः सायुधेभ्यो नमो नमः । आयुधेभ्यो
वाहनेभ्यश्छत्रेभ्यश्च नमो नमः ॥ आसनेभ्यो दुर्मुखेभ्यो देवेभ्यश्च नमो नमः । दै-
त्यराक्षसगन्धर्वपिशाचेभ्यो नमो नमः ॥ पितृभ्यः सप्तभेदेभ्यः प्रेतेभ्यश्च नमो नमः ।
सुसूक्ष्मेभ्यश्च भूतेभ्यो भावगम्येभ्य एवच ॥ नमस्ते बहुरूपाय विष्णवे परमात्मने ।
अथ वहूनि नामानि वक्ष्यामि तु पृथक्पृथक् ॥ प्राङ्मुखोदङ्मुखश्चैव तर्पयेच्च यथाक्र-
मम् । अर्वैः पुष्पैस्तथा दर्भैः क्षीरेण मधुमिश्रितैः ॥ देवानृषींस्तथा पितॄन्मन्त्रेणानेन
तर्पयेत् । अन्यैश्च विविधैर्दानैस्तृप्तिमाप्नोति शाश्वतीम् ॥ तथाष्टाद॰ नामानि पुराणा- श्लो०
नां च येस्थिताः । तर्पयामि च तान्सर्वानिदमस्तु तिलोदकम् ॥ ब्राह्मं पद्मं वैष्णवं च
शिवं भागवतं तथा । तथान्यं नारदीयं च मार्कण्डेयं च सप्तमम् ॥ आदित्यमष्टमं च- १०३

92

व भविष्यन्नवमं तथा । दशमं ब्रह्मवैवर्तं वायुमेकादशं तथा ॥ वाराहं द्वादशं चैव स्कन्दं चैव त्रयोदशम् । चतुर्दशं वामनं च कौर्मं पञ्चदशं स्मृतम् ॥ मात्स्यं च गारुडं चैव ब्रह्माण्डं च ततः परम् । इत्यष्टादशनामानि पुराणानां च ये स्थिताः ॥ तानि संकीर्तयाम्यद्य सततं तर्पयामि च । अथाष्टादशनामानि विद्यास्थानानि ये स्थिताः ॥ तेष नामानि श्रेष्ठानि तर्पयामि सरामि च ॥ अङ्गानि वेदाश्चत्वारो मीमांसा न्यायविस्तराः पुराणं धर्मशास्त्रं च विद्या एताश्चतुर्दश ॥ आयुर्वेदो धनुर्वेदो गान्धर्वश्चेति तत्त्रयम् विद्याशास्त्रं चतुर्थं च विद्या ह्यष्टादश स्मृताः ॥ तर्पयामि च ताः सर्वा इद० । तथैकविंशति वीरा नरकाश्चैव ये स्थिताः ॥ तेषां नामानि० । तामिस्रमन्धतामिस्रं महारौरवरौरवौ ॥ नरकं कालसूत्रं च महानरकमेवच । सञ्जीवनं महावीचिं तपनं सुप्रतापनम् । सङ्घातकं सकल्लोलं कुद्दालं कुट्टनं तथा । लोहशङ्कुं च भीष्मं च पन्थानं शल्मलिं नदीम् ॥ असिपत्रवनं चैव लोहकण्ठकमेवच । इत्येकविंशनामानि नरकानां च ये स्थिताः । तर्पयामि० । अथ द्वादश सूर्याश्च तेजोमयाश्च ये स्थिताः ॥ तेषां ना० । मित्रश्च व

श्लो० रुणः पूषा धाताचैवार्यमा भगः ॥ इन्द्रो विवस्वान्दीप्तांशुः सूर्यो मार्ताण्ड एवच । वि

१०४ ष्णुश्च द्वादशस्तेषामजघन्यजघन्यकौ ॥ तर्पयामि० । अथैकादश ये रुद्रा महाभैरवरु

९३

पिणः ॥ तेषां० । अजैकपादऽहिर्बुध्न्यः कृत्तिवासाः पिनाकभृत् ॥ वृषाकपिश्च सिन्धुश्च
कपर्दी च ततः परम् । बहुरूपो हरश्चैव रुद्रस्त्र्यम्बक एवच ॥ तर्पयामि० । अथाष्टौ व-
सवो ये च पूज्याः पितृगणेष्वपि । तेषां० ॥ आपो ध्रुवश्च सोमश्च सावित्रोऽह्यनलानिलौ ।
प्रतीपश्च प्रभासश्च वसवोष्टाविमे स्मृताः । तर्पयामि० ॥ आथात्र दश वै भिन्ना वि-
प्रे देवाश्च ये स्थिताः । तेषां० ॥ ऋतुर्दक्षश्च सत्यश्च वसुश्च कालकामुकौ । ध्व-
निश्च रुचकश्चैव पुरूरवार्द्रावाससौ ॥ तर्पया० । अथ चतुर्दश ये वै मन्वन्तराश्च सं-
स्थिताः ॥ तेषां० । चाक्षुषो रुद्रसावर्णोविवस्वान्दक्षरैवतौ ॥ सूर्यश्च तामसश्चैव स्वाय-
म्भुवस्तथैवच । ब्रह्मा स्वारोचिषश्चैव हारीतो मनुरेवच ॥ धर्मश्चतुर्दश चेति मन्वन्तरा प्र-
कीर्तिताः । तर्पयामि० ॥ अथातः सप्त ये ख्याताः पाताला जीवसंश्रिताः । तेषां० ॥
तलं श्रीतालं भूतालं नितालं नभसस्तलम् । रसातलं सुतालं च पातालाश्चेति सप्तकम् ॥
तर्पयामि० । भूर्लोकोथ भुवोलोकः स्वर्लोकश्च ततः परम् ॥ महो जनस्तपः सत्यं
सप्त लोका इमे स्मृताः । तर्प० ॥ गङ्गासिन्धुसरस्वतीवितस्तायमुनास्तथा । गोदावरीम- श्लो०
र्मत्यौ नर्मदैरावती तथा ॥ तर्पयामि० । केदारं ब्रह्मतीर्थं च वारानसी च मानसम् ॥
प्रयागं पुष्करं कौरं रामं कनखलं तथा । तर्पयामि० ॥ जम्बुद्वीपः कुमारश्च कुशद्वीप- १०५

स्तथैवच । क्रौञ्चः सिंहलद्वीपश्च शाकलिः पुष्करस्तथा ॥ तर्पयामि० । मेरुर्मलयमन्दा-
रौ विन्ध्याचलहिमाचलौ । चित्रकूटश्च कैलासो मैनाको गन्धमादनः ॥ तर्प० । सो-
मसूर्याग्निधामश्च आप आकाश एवच ॥ अन्नं च विष्णुधामश्च धाम इत्यभिधीयते ।
तर्प० ॥ तर्पयामि च तान्देवानादित्या वसवश्च ये मरुतोथाश्विनौ रुद्राः सुपर्णाः पन्न-
गा ग्रहाः ॥ असुरा यातुधानाश्च पिशाचाकिन्नरा गणाः । शाकिन्यो यक्षवेताला यो-
गिन्यः पूतनादयः ॥ जम्बकाः सिद्धगन्धर्वा नागा विद्याधरा नगाः । दिक्पाला लोक-
पालाश्च मातरश्च महोदयाः ॥ जगतां शान्तिकर्तारो ब्रह्माद्याश्च महर्षयः । तर्पया-
मि० ॥ कण्ठोपवीती । एकैकमञ्जलिं देवा द्वौ द्वौ तु सनकादयः । अर्हन्ति पितरस्त्रीं-
स्त्रींस्त्रयोप्येकैकमञ्जलिम् ॥ अग्निऋषिः पावमानः पञ्चजन्यः पुरोहितः । तमीमहे महा-
गयम् ॥ सनकस्तृप्यतां २, सनन्दनः, सनातनः, सनत्कुमारः, कपिलः, आसुरिः, वो-
ढा, पञ्चशिखः, मरीचिः, अत्रिः, अङ्गिराः, पुलहः, पुलस्त्यः, भृगुः, क्रतुः, प्रचे
श्लो० ताः, वसिष्ठः, नारदस्तृप्यतां २ ॥ * मनुगौतमसंवर्तविष्णुच्यवनकश्यपाः । बृहस्प-
त्युशनःशङ्खशातातपपराशराः पितामहाङ्गिरोदक्षयमापस्तम्भदेवलाः । बुद्धबौधायनव्या-
१०६ सवसिष्ठजमदग्नयः ॥ सोमनारदहारीतयाज्ञवल्क्यप्रचेतसः । लिखितश्छागलेयात्रिविश्वा-

९५

मित्रमरीचयः ॥ कात्यायनोथ जावालिपैठीनससुमन्तवः । धर्मशास्त्रप्रणीतारः षट्त्रिंश-
न्मुनयश्चये ॥ ते सर्वे तृप्तिमायान्तु मया दत्तोदकैः शुभैः * ॐशतर्चिनो मध्यमश्च गृ-
त्समदश्च तृप्यताम् । विश्वामित्रं तर्पयामि वामदेवश्च तृप्यताम् ॥ भारद्वाजः कश्यपा-
त्रिवसिष्ठजामदग्न्यः । तर्पयामि० ॥ प्रागाथः पावमानश्च क्षुद्रसूक्तश्च तृप्यताम् । महा-
सूक्तऋषिश्चैव तृप्यतां सनको भृगुः ॥ सनातनः सनन्दश्च कपिलो ह्यत्रभावकः वोढः
पञ्चशिखो योगी जावालिस्तृप्यतां सदा ॥ अत्रिवसिष्ठपुलहाः कश्यपो गौतमस्तथा ।
च्यवनो व्याघ्रपाद्विष्णुर्देवलो लोमहर्षणिः ॥ सनको वै दीर्घतपा पाराशर्यपराशरौ । वा-
ल्मीकिश्चैव वत्सश्च भारद्वाजोथ शौनकः ॥ सनन्दः पिपिलादश्च लौगाक्षिः कण्व
एवच । आपस्तम्भः सुमन्तुश्च वौधायनवलायनौ ॥ याज्ञवल्क्यो मनुर्दक्षो भृगुशङ्खम-
रीचयः । ऋषिश्रृङ्गोथ कुशिको गर्गकौत्ससनातनाः ॥ अगस्त्यः शुनलाङ्गूलः शुनः-
श्वेपश्वपुच्छकौ । हारीतजमदग्निश्च गुरवश्च तपोधनाः ॥ तर्पयामि० । रैणायत्यः सत्य-
मुद्रो व्यासोथ भार्गवस्तथा ॥ गौर्गुण्डी गौर्गुलो चैव उपमन्युस्तथा मुनिः । करटो मू- श्लो०
षको गार्ग्यो वर्षकर्णादयो दश ॥ एते मे सामगाचार्याः स्वस्ति कुर्वन्ति तर्पिताः ॥
कुथूमिः शालिहोत्रश्च जैमिनिश्च त्रयोदश ॥ एते० । शाटिवालो विशालश्च ताण्ड्यो- १०७

सोमराहुश्च अगस्त्यो मनुरेवच । एते० ॥ वल्कशि- रश्च वृषाणकः । एते० ॥ रुरुकः सोमराहुश्च अगस्त्यो मनुरेवच । एते० ॥ अग्निहोत्रश्च शालिश्च जैमिनिश्च म- रोथ गोविलो गौतमः कण्वकस्तथा । एते० ॥ अग्निहोत्रश्च शालिश्च जैमिनिश्च म- हाशयः । एते० ॥ लौगाक्षिः कपिलः काण्वस्तथा भागुरिर्देवलौ । एते० ॥ शुनःशि- श्वलाङ्गूलौ शुनःपुच्छोथ शौनकः । एते० ॥ शाण्डलिश्चैव शाकल्यः शुकःश्रोत्र- स्तथैवच । एते० ॥ अपसव्येन । उशन्तस्त्वा हवामह उशन्तः समिधीमहि । उशन्नु- :शन्त आवह पितॄन्हविषे अत्तवे ॥ कव्यवाडऽनलः स्वधा यिभ्यः स्वधानमस्तृप्यतां ३ :सोमः, यमः अर्यमा, अग्निष्वाताः, बर्हिषदः, हविष्मन्तः, सुकालिनः, सोमपाः, आ- -ज्यपाः, वसवः, रुद्राः, आदित्याः, स्वधा यिभ्यः स्वधानमस्तृप्यन्तां ३ ॥ सुमन्तुर्जै- :मिनिश्चैव वैशम्पायन एवच । पैलसूक्तस्तथा भाष्यस्तृप्यतां भारतस्तथा ॥ महाभारत धर्मश्च गालवो गोविलस्तथा शाकल्यो गार्ग्यशाण्डल्यौ शुकः श्रोत्रश्च भार्गवः ॥ को- किलः कौशिकश्चैव ब्राभ्रव्यो मण्डूकः स्वधा । गार्गीयो जाह्नवीयश्च तृप्यतां प्रतिथी

श्लो० यकः ॥ सुलभा स्वधा मैत्री च तृप्यतामेतदम्बुना । कोहोत्रं तर्पयामीति कौशीतं पाठ्य मेवच ॥ तर्पयामि महायज्ञं स्वयज्ञं तर्पयामि च । सांख्यायनं तर्पयामि तर्पयाम्यश्व लायनम् ॥ महाश्वलायनं स्वधा तर्पयाम्यौदवाहिनीम् ॥ महौदवाहिनीं स्वधा शैशिनं त

यामि च ॥ महाशौशनकं चैव तर्पयाम्येतदम्बुना । * शङ्खस्य त्रिष्टुप् पितरः । उदी-
तामवर उत्परासः उन्मध्यमाः पितरः सोम्यासः । असुं य ईयुरवृका ऋतज्ञास्ते नोऽ-
न्तु पितरो हवेषु । यमस्य त्रिष्टुप् अङ्गिरसः । अङ्गिरसो नः पितरो नवग्वा अथर्वाणो
भृगवः सोम्यासः । तेषां वयं सुमतौ यज्ञियानामपि भद्रे सुमनस्ये स्याम । आयान्तु
नः पितरः सोम्यासः अग्निष्वाताः पथिभिर्देवयानैः । अस्मिन्यज्ञे स्वधया मद-
न्त्वधि ब्रुवन्तु तेऽवन्त्वस्मान् ॥ देवताभ्यः पितृभ्यश्च महायोगिभ्य एवच । नमः स्व-
धा च स्वाहाश्च नित्यमेव भवत्विह ॥ अद्य तावत् पिताऽमुकामुकगोत्रः स्वधानमस्तृ-
प्यतां ३ ऊर्जं वहन्ती अमृतं घृतं मधु पयः कीलालं परिस्रुतं स्वधास्थ पितृन्मे तर्पयत ।
पितृभ्यः स्वधायिभ्यः स्वधानमस्तृप्यतां ३ पितामहेभ्यः० प्रपितामहेभ्यः० ॥ ये चेह
पितरो येच नेह यांश्च विद्म या उ च न प्रविद्म । त्वं वेत्थ यतते जातवेदा स्वधाभि-
र्यज्ञं सुकृतं ज्वषस्व । पितामहः० । मधु वात ऋतायते मधु क्षिरन्ति सिन्धवः, माध्वी-
र्नः सन्त्वौषधीः १ मधु नक्तमथोषसा मधु मत्पार्थिवं रजः, मधुद्यौरस्तु नः पिता २ श्लो०
मधुमान्नो वनस्पतिर्मधुमानस्तु सूर्यः, माध्वीर्गावो भवन्तुनः ३ प्रपितामहः० । नमो वः
पितरो मन्यवे, नमो वः पितरः शुष्माय, नमो वः पितरो जीवाय, नमो वः पितरो १०६

रसाय, नमो वः पितरः क्रूराय, नमो वः पितरो बलाय, नमो वः पितरः स्वधा व
पितरो यात्र पितरः स्वधा यत्र यूयं स्थ साऽयुष्मन्तं सुधया यूयं, यथाभागं मादयध्वं
येह पितर ऊर्ग्यत्र वयं स्म सास्मासु तस्य वयं ज्योग्ज्योवन्तो भूया स ।। माता, पिताम
ही, प्रपितामही । मातामहः, प्रमातामहः, वृद्धप्रमातामहः । मातामही, प्रमातामही, वृ
द्धप्रमातामही, मातृपक्षास्तु ये केचिद्ये चान्ये पितृपक्षजाः । गुरुश्वशुरबन्धूनां ये कुले
समुद्भवाः । ये प्रेतभावमापन्ना ये चान्ये श्राद्धवर्जिताः । जलदानेन ते सर्वे लभन्ता
तृप्तिमुत्तमाम् ।। समस्तमातापितृभ्यो द्वादशदैवतेभ्यः पितृभ्यः हिमपानं स्वधा, क्षीरपा
नं स्वधा, मधुपानं स्वधा, तिलोदकं स्वधा, उदकतर्पनं स्वधा हिमं २ रजतं २ । सव्ये
न । वसन्ताय नमः, ग्रीष्माय, वर्षाभ्यः, शरदे, हेमन्ताय, शिशिराय, षड्तुभ्यो नम
देवासुरास्तथा यक्षा नागा गन्धर्वकिन्नराः । पिशाचा गुह्यकाः सिद्धाः कूष्माण्डास्त
रवः खगाः ।। तर्पयामि० ।। कण्ठोपवीती । जलेचरा भूनिलया वाय्वाधाराश्च जन्तवः
श्लो० तर्पयामि० ।। अपसव्येन । नरकेषु च सर्वेषु यातनासु ये स्थिताः । तेषामाप्यायनार्थं
तद्दीयते सलिलं मया ।। ये बान्धवा अबान्धवा येऽन्यजन्मनि बान्धवाः । तेषां ।। ये
११० दग्धा अदग्धावा प्राणमन्तश्च ये स्थिताः । तेषां ।। ये चरन्ति सदा मेरौ ब्रह्मणाधि

ताः सुराः । तेषां ॥ कैलासवासिनो ये च ये शिवध्यानतत्पराः । तेषां ॥ व्यवरा ब्रा-
ह्मणा येच गुरवश्च तपोधनाः । तेषां ॥ अगतीकाश्च शिष्याश्च प्रत्यक्षं भूरिभोजनाः
तेषां ॥ नागलोकगता ये च विष्णुध्याने च ये रताः । तेषां ॥ अमरा येऽवतिष्ठन्ति
विष्णुं क्षीरोदशायिनम् । तेषां ॥ इत्थमेते मुनिवराः समाख्याताः स्वनामभिः । अन्ये
नाख्यातनामान ऊर्ध्वरेताः प्रजासृजः । तृप्तिमायान्तु ते सर्वे इदमस्तु तिलोदकम् ॥
पिता पितामहश्चैव तथैव प्रपितामहः । मातामह्यः पराश्चैव प्रमातामह्य एवच । प्रपू-
र्वा वृद्धपूर्वाश्च पूर्वोत्तरास्तथैवच । तेषां ॥ भ्राता मातामह श्चैव प्रमातामह एव च ।
वृद्धपूर्वो मातुलश्च गुरुः श्वशुर एव च । तेषां ॥ शुश्रूः स्वसा गुरुपत्नी भार्या मित्रस्य
तृप्यताम् । पितृमातामहश्चैव पितृव्यो भ्रातरस्तथा । पितृस्वसा मातुलश्च तद्भगिन्य-
श्च मातुलाः । भार्या भगिन्यो दौहित्रा शुशुरो भावकाः स्नुषाः स्यालाश्च गुरुरा-
चार्यः स्वामी सखा यथा क्रमम् । तर्पयामि तान्० ॥ आ ब्रह्मणो ये पितृवंशजाता मा-
तुस्तथा वंशभवा मदीयाः । वंशद्वयेऽस्मिन्मम दासभूता भृत्यास्तथैवाश्रितसेवकाश्च । श्लो०
मित्राणि सख्यः पशुवंशभृत्या दृष्टाः श्रुता वापि कृतोपकाराः । जन्मान्तरे ये मम स-
ङ्गताश्च स्वधा त्विदमम्बु ददामि तेषाम् ॥ पितृव्या भ्रातृपुत्राश्च मातुलस्य च ये सु- १११

ताः । मातृस्वसृसुताश्चैव पुत्रास्तद्वत्पितृस्वसुः ॥ तर्पयामि० । तनयास्तनयाश्चैव ये
चान्ये स्नेहभागिनः । तर्पयामि ॥ ये मत्कुल्याः स्वर्गलोके नरके वा वसन्ति ये । अ-
वीच्यन्तर्गता ये च कुम्भीपाकान्तरे स्थिताः ॥ रौरवस्योपभोक्तारो ये महारौरवे स्थिताः ।
कालसूत्रोपतप्ताङ्गा असिपत्रवने स्थिताः । तर्पयामि० ॥ क्षुधूत्पूयास्रुविष्टारकटाहाप्लुतवि-
ग्रहाः । अन्यत्रवा यत्र तत्र यातनासु च ये स्थिताः तर्पयामि० । यमाय धर्मराजाय० ॥
स्वाहाकारः स्वधाकारः प्रणवश्चैव सप्तधा । तर्पयामि० । देवाश्च ऋषयश्चैव पितर-
स्तृप्यतां स्वधा । यत्र देवाश्च ऋषयो मघवान्सप्त सप्तश्च ॥ भूताश्च प्रेतरूपाश्च प्र-
णवादि ,मो नमः । तर्पयामि० ॥ ये मातृकुलसम्भूता पितृवंशसमुद्भवाः । दुहितुश्च
कुले जाता ये भ्रातृस्वसृवंशजाः ॥ राज्ञां चैव कुले ये च ये तद्वर्गसमुद्भवाः । शुशु-
रस्य कुले जाता ये शुश्रूकुलसम्भवाः ॥ सुहृत्कुले गुरुकुले बन्धोर्ममकुले तथा । येस्मिं-
स्स्थाने च पितरो धनसम्बन्धिनश्च ये ॥ येषां गृहे मया भुक्तं येषां भुञ्जाम्यहं पुनः ।
श्लो० पुत्रदारविहीनाश्च नरके वा वसन्ति ये ॥ तेभ्यः सर्वेभ्यः पितृभ्य इदमस्तु तिलोदक-
म् ।-अस्मिन्दिने महापुण्ये यन्मया समुपार्जितम् ॥ तेनायं सर्वजन्तूनां क्लेशदोषः प्रशा-
११२ म्यतु । मत्कुले ये च पितरो लुप्तपिण्डोदकक्रियाः । सूक्ष्मास्त्वकृतचूडाश्च ये च गर्भा-

१०१

दिके मृताः ॥ येपिदग्धा अदग्धा वा ये च संस्कारवर्जिताः । तेषा० ॥ यत्र मे मातरः
प्रेता यत्र प्रेताः प्रमातरः । महाप्रमातरः प्रेतास्तिलाम्भस्तत्र गच्छतु ॥ यत्र मे पितरः प्रे-
ता यत्र प्रेताः पितामहाः । प्रपितामहान्तराः प्रेतास्तिलाम्भस्तत्र गच्छतु ॥ पञ्चाशत्को-
ट्यो घोरा नरकानां प्रकीर्तिताः । असत्कर्मरतानां च नराणां शास्त्रदूषिणाम् ॥ पितॄणां
चैव सर्वेषामिदमस्तु तिलोदकम् ॥ देवद्रव्योपहर्तॄणां शरणागतघातिनाम् । आत्मनस्त्या-
गिनां चैव चण्डालादिहताश्चये । तमसा दग्धकर्माणो महापातकिनश्च ये । गोघ्नानां च
कृतघ्नानामगम्यगामिनां तथा । सुवर्णभूमिहर्तॄणां शौचाचारविवर्जिताम् । दयादाक्षिण्य-
हीनानां पैशुन्यानृतचेतसाम् । नरकास्तु समाख्याताश्चत्वारिंशाधिकं शतम् ॥ तेषामपि
प्रधानाश्च नरकास्तु प्रकीर्तिताः । अवीचिः कुम्भेपाकश्च महारौरवरौरवाः । असिपत्रवनं
चैव तथा वैतरणीनदी । तन्मध्ये पतिता ये च ये च कर्मवशानुगाः । तरन्ति सर्वे त-
त्क्षिप्रं मद्दत्तेनोदकेन ते । सप्त सप्त तथा सप्त मातृकाः पितृकाश्च ये । गुरुश्वशुरवंशोत्था
तृप्यन्तामुदकेन ते । पितॄणां चैव सर्वेषामिदमस्तु तिलोदकम् । उन्मत्ताः प्रतिपन्नाश्च श्लो०
गुरुशापव्यतिक्रमात् । तेषामुद्धरणार्थाय नराणां नरकार्णवात् । ब्रह्मा विष्णुश्च रुद्रश्च ई-
श्वरश्च सदाशिवः । पञ्चकारणसंयोगान्नराणामस्तु तोषणम् । गोब्राह्मणहतानां च तथा ११३

विश्वासघातिनाम् । अन्येषां पतितानां च इदमस्तु तिलोदकम् ॥ मा विघ्नं मा च मे पापं मा सन्तु परिपन्थिनः । सौम्या भवन्तु तृप्ताश्च भूताः प्रेताः सुखावहाः । सव्येन विष्णुपीठे भद्रपीठे तीर्थे देवसमागमे । यागार्चनेग्निकार्ये च देवगोद्विजसन्निधौ । दद्यान्मन्त्रमयं तोयं पितृणामात्मतृप्तये । सर्वं प्रतिग्रहे होमे स्नाने दाने सुरार्चने । अध्यापने तथा यज्ञे य इदं तर्पणं पठेत् । धनं कीर्तिर्यशश्चैव नित्यं च सुखमश्नुते । दीर्घायुः सुबहून्पुत्रान्पठमानो लभेत्सदा । वपुः पूतं पवित्रं च नित्यं गोदानिकं फलम् ॥ ओंनमो देवेभ्यः० । ॐ इति श्लोकतर्पणम् ॥

॥ अथ गोप्रदानम् ॥

आदौ कुशब्राह्मणे जीवाधानं दत्वा ' नमस्कारः । प्रसीद मम हे विद्वन्भगवंस्त्वां नुता वयम् । अनुग्रहार्थमस्माकमियं गौः प्रतिगृह्यताम् । आपादाच्छीर्षपर्यन्तमापो हिष्ठेति शाश्वतम् । न वहन्तीति मन्त्रेण गवां स्नानं प्रकल्पयेत् ॥ आपोहिष्ठा० । हिरण्यवर्णाः
गो० शु०.४ । न वहन्तीभिः स्नायाद्यद्वहन्तीभिः स्नायात्त्वेत्रं यश ऋच्छेन्न कूप्याभिः स्नायाद्विषं यश ऋच्छेत्स्थावराभिः स्नायादेता वां अपां दीक्षिता पशुमतीर्याः स्थावरा लोमशाः
११४ सन्तता लोमशा पशवो यजमानमेव यशमर्पयन्ति । इति गवामभ्युत्क्षणम् । ततो ब्राह्म-

र्गवोः पूजनम् ॥ ओंगायत्र्यै नमः ३ ॥ तत्पुरुषाय विद्महे महादे० ३ ॥ ( जलधेनुवि-
षये ) । वासुदेवाय वि० ३ सुभगायै वि० ३ तन्नो धेनुः प्रचोदयात् ३ रुद्रस्य (विष्णोः)
सानुचरस्य । नन्दायाः, सुनन्दायाः, सुभगायाः, सुशीलायाः, सुरभेः, वरकामधेनोः
आत्मनो० श्रीविष्णुप्रीत्यर्थं पितुर्वा मातुः परलोके वैतारिणीनदीसुखसन्तारणार्थं गो-
प्रदाननिमित्तं रुद्र (विष्णु) पूजनं धेनुपूजनमर्चामहं करिष्ये ॥ आवाहनं । या देवी भार्ग-
वकुले नन्दा सर्वत्र पूजिता । आगता सा गृहे माता सुप्रीता वरदास्तु मे ॥ या गिरीशं
सदा देवी सुनन्दा प्रत्युपस्थिता । आगता० ॥ सुभगा या भारद्वाजे सर्वकामफलाप्तये ।
आगता० ॥ सुशीला कश्यपे या तु पूजिते सर्वपूजिता । आगता० ॥ आवाहयाम्यहं
देवीं सुरभीं लोकमातरम् । पूज्यां त्रिभुवने दैत्यैर्गन्धर्वैः सुरकिन्नरैः । ॥ अमृतस्रा-
विणीं देवीं सर्वयज्ञप्रवर्तिनीम् । देवि त्वं सर्वदेवानां सर्वकामदुघा मुदा ॥ मया काम-
दुघा दत्ता कामदास्तु भवे भवे । देवि त्वं पापहर्तासि देवि त्वं मलनाशिनी ॥ यवान्विकीर्य
पाद्यादि० । रुद्राय० अर्घो नमः पुष्पं नमः । पादेपु वेदाश्चत्वारः ऋग्वेदाय नमः यजु-
र्वे० सामवे० अथर्ववे० । कृतयुगाय त्रेता० द्वापर० कलि० । ललाटे रुद्राय नेत्रयोः सू-
र्याय सोमाय श्रवणयोः अश्विभ्यां नासिकायां वायवे दन्तेपु । ऋषिभ्यो ओष्ठयोः धर्माय

अधर्माय जिह्वायां सरस्वत्यै हुङ्कारे प्रजापतये ग्रीवायां कालरात्र्यै शृङ्गयोः मेरवे मन्दाराय पार्श्वयोः दशदिग्भ्यो तन्मध्ये विष्णवे ध्रुवाय असुरेभ्यो गणेभ्यो उरसि स्कन्दाय सिद्धेभ्यो साध्येभ्यो रोमकूपेषु विद्याधरेभ्यो जठरे हुताशनाय श्रोणितटे पितृभ्यो लाङ्गूले बालखिलेभ्यो स्तनेषु क्षीरोदधये क्षारो० दध्यु० घृतो० सुरो० स्वादू० इक्षू० हृदये वराहाय कुक्षौ वसुभ्यो आधारे अग्नये पृष्ठे वैवस्वताय यमाय दक्षिणकुक्षौ देवेभ्यो वामकुक्षौ असुरेभ्यो अपाने सर्वतीर्थेभ्यो गोमये लक्ष्म्यै प्रस्रावे जाह्नव्यै नदीभ्यो खुरमध्ये गन्धर्वेभ्यो खुराग्रे पन्नगेभ्यो खुराणां पश्चिमभागे गणेभ्यो असुरेभ्यो रुद्रसानुभ्यो जानुदेशे विश्वेदेवेभ्यो सर्वदुहितृभ्यो सर्वस्वसृभ्यो कृकाटिकायां सटेषु विद्याधरेभ्यो नन्दायै सुनन्दायै सुभगायै सुशीलायै सुरभ्यै वरकामधेनवे भूर्भुवःस्वःस्वरूपायै अर्घो नमः ॥ धूपदीपवासोऽपोशानं । पुनः शन्नो देवी० । सैव दक्षिणा ॥ विष्णोः पृच्छां विसर्ज्य

ओंभूःपुरुषं विस० ३सर्वा विष्णुगायत्रीः आत्मनो० पितुर्वा मातुर्विष्णुपूजनमच्छिद्रं०

गो:० आपन्नोस्मि०। ध्येयःसदा०। नमो ब्रह्मणे०। अद्य तावत् पितुर्वा मातुः परलोके सुखसन्तारणार्थं रुद्राय (विष्णवे) सानुचराय मणिमुक्तप्रवालालङ्कारादिसहितां सहिरण्यां सवासां

११६ सर्वोपस्करणोपेतां गां ददानि ३ गवामङ्गेषु तिष्ठन्ति भुवनानि चतुर्दश । यस्मात्तस्मा

च्छुभं मेस्यादिहलोके परत्र च । गां प्रतिगृह्णामि ३ इति ब्रूयात्प्रतिगृहीता । अथाञ्जलिं बद्ध्वा जपेत् ।। क इदं कस्मै अदात् कामः कामाय कामो दाता कामः प्रतिगृहीता, कामः समुद्रमाविशत् कामेन त्वा प्रतिगृह्णामि कामैतत्तेऽस्तु इति ।। तत्पुच्छं तु करे कृत्वा देवान्पितॄंश्च तर्पयेत् । कुशसर्षपमध्वाज्यपयोक्षततिलोदकैः ।। ब्रह्मा विष्णुश्च रुद्रश्च ईश्वरश्च सदाशिवः । महाकालाग्निरुद्रश्च व्यक्ताव्यक्तमनोरथाः । ते सर्वे तृप्तिमायायान्तु गोपुच्छोदकतर्पणात् ।। इन्द्राद्या लोकपालाश्च ब्राह्म्याद्या मातरस्तथा । आदित्या वसवो रुद्राः सरितः सागरास्तथा । ते सर्वे० ।। देवकन्या नागकन्याश्चासुराणां च कन्यकाः । ऋषयो मुनयो गावो देवमातर एव च । ताः सर्वा० ।। यमो वै धर्मराजश्च मृत्युश्चान्तक एव च । वैवस्वतश्च कालश्च सर्वप्राणहरस्तथा । औडुम्बरश्च नीलश्च चित्रगुप्तस्तथैव च । ते सर्वे० ।। पुष्करो नैमिषारण्यं कुरुक्षेत्रं पृथूदकम् । कार्कोटकं प्रभासं च तथा बदरिकाश्रमम् । ते स० ।। अन्यानि सर्वतीर्थानि ह्यासमुद्रात्सरांसि च । तानि सर्वाणि तृप्यन्तु गो० ।। भौमः शनैश्चरश्चैव बुधः शुक्रो बृहस्पतिः । सूर्यसोमौ च राहुश्च ध्रुवागस्त्यसमाहिताः । उपग्रहाश्च ये देवास्तथान्ये लोकपालकाः । ते स० ।। शेषः कूर्मस्तथा नागाः किन्नराः पर्वतादयः । विद्याधरा अप्सरसो मुनयश्चोर्ध्व-

100

रेतसः । सप्तर्षयः ससमुद्रा वाडवाग्निर्महाबलः। ते सर्वे० ॥ कूर्मकच्छपमत्स्याश्च पुरुषा जलवासिनः । अश्विनौ च कुमारश्च सत्यवन्तो महातपाः । ते सर्वे०॥ देवासुरास्तथा यक्षा नागा गन्धर्वकिन्नराः यक्षरक्षांसि डाकिन्याः पूतनाजम्बुकादयः । ते० ॥ ब्रह्म-राक्षसवेतालाः कूष्माण्डाः क्रूरमार्गगाः । भूम्यन्तरिक्षपाताले ये वसन्ति महोदयाः ते० ओंकारश्चैव गायत्री सावित्री च सरस्वती । ऋग्वेदोथ यजुर्वेदः सामवेदस्तथैव च । अथर्वश्चोपवेदाश्च सषडङ्गपदक्रमः । ते० ॥ इन्द्रोपेन्द्रो महेन्द्रो वा देवेन्द्राश्चापि ये सुराः । धान्वन्तराधिपा ये च संभूता ये पुरन्दराः । ते० ॥ यः प्रभुः सर्वभूतानां येन सर्वं प्रतिष्ठितम् । स एष भगवान्विष्णुर्बहुरूपो जनार्दनः । ब्रह्मा प्रजापतिश्चैव मित्रो मरुत्तथाश्विनौ । ते० ॥ कार्तिकेयो महासेनः स्कन्दरूपी षडाननः। नन्दी चैव महाकाले भृङ्गिराट्च गणेश्वरः । षष्टि कोटिगणाः सर्वे शिवभक्ताश्च ये स्थिताः । ते० ॥ ब्रह्माद्याश्च सुरश्रेष्ठाः पद्मयोनिः पितामहः । नासत्यावश्विनौ दस्रावाश्विनीयौ च तावुभौ

गा० ते सर्वे० ॥ गृत्समदस्य गायत्री विश्वेदेवास० ॥ ओं अथ यजुर्वेदकाठके लौगाक्षिसूत्रे यज्ञपरिशिष्टे तर्पणखण्डं व्याख्यास्यामः ॥ अग्निः प्रजापतिः सोमो रुद्रोऽदितिर्बृहस्पतिः सर्प इत्येतानि प्राग्द्वाराणि सदैवतानि सनक्षत्राणि सग्रहाणि साहोरात्राणि समुहूर्तानि

११८

107

नि तर्पयामि वसूंश्च तर्पयामि ॥ पितरोऽर्यमा भगः सविता त्वष्टा वायुरिन्द्राग्नी इत्येता-
नि दक्षिणद्वाराणि० रुद्रांश्च तर्पयामि ॥ मित्र इन्द्रो नैर्ऋतिरापो विश्वेदेवा ब्रह्मा वि-
ष्णुरित्येतानि पश्चिमद्वा० आदित्यांश्च तर्पयामि ॥ वसवो वरुणो अजैकपादहिर्बुध्न्यः
पूषाश्विनौ यम इत्येतानि उदग्द्वारा० साध्यांश्च तर्पयामि ॥ ब्रह्माणं तर्पयामि प्रजापतिं
चतुर्मुखं स्वायंभुवं परमेष्टिनं हिरण्यगर्भं रुद्रपार्श्वदान् रुद्रपार्षदींश्च ओंभूःपुरुषं ओंभुवः-
पु० ओंस्वःपु०ओंभूर्भुवःस्वःपु० ओंभूर्लोकं० ओंभुवोलोकं ओंस्व० ओंमहो० ओंजनो० ओं
तपो० ओंसत्य० भवंदेवं शर्वदेवं रुद्रंदेवं पशुपतिंदेवं उग्रंदेवं महादेवं भीमंदेवं ईशानं-
देवं । भवस्यदेवस्यपत्नीं शर्वस्यदे० रुद्रस्य० पशुपतेर्दे० उग्रस्य० महादेवस्य० भीमस्य०
ईशानस्य० ॥ भवस्यदेवस्यसुतं शर्वस्य० रुद्रस्य० पशुपते० उग्रस्य० महादेवस्य० भी-
मस्य० ईशानस्य ।सनकं सनत्कुमारं स्कन्दं षष्टं विशाखं स्कन्दपार्षदान् स्कन्दपार्षदींश्च
विघ्नान् वीरान् कालं एकदन्तं हस्तिमुखं विघ्नपार्षदान् विघ्नपार्षदींश्च यमं धर्मराजं मृत्युं
अन्तकं वैवस्वतं सर्वप्राणहरं औडम्बरं नीलं बभ्रं वृकोदरं भीमं चित्रं चित्रगुप्तं पाशह- गो०
स्तं कृतान्तं प्रेताधिपतिं उग्रमुखं भारद्वाजं धान्वन्तरिं धान्वन्तरिपार्षदान् धान्वन्तरिपार्ष-
दींश्च विद्यां माहेश्वरीं वह्निं गेहाग्निं दक्षिणाग्निं आहवनीयाग्निं सूर्यं वरुणं वायुं कुबेरं इ- ११८

न्द्रं जातवेदसं नैर्ऋतिं मारुतं वैश्रवणं ईशानं अग्निं शक्रं । रौरवं असिपत्रवनं कुम्भीपा-
कं विभीषणं अतिभीषणं गर्भवासं स्वात्मगं गुह्यकान् मोहिनीं पयोधरान् आकाशाधारा-
न् वाय्वाधारान् निराधारान् निराश्रयान् भद्राश्वद्वीपं शाकल्य० जम्बु० कुश० क्रौञ्च०
शल्मलि० गोमेध० पुष्कलद्वीपं अस्तास्मितं केतुमालिं मोहान्धकारं संयमिनीं सुमेरुं ह-
रिवर्षं हेमकूटं किन्नरं हिमाचलं मलयं । अमरावतीं ज्योतिष्मतीं संयमनीं कृष्णां प्रभावतीं
शुद्धवतीं गन्धर्ववाहिनीं महोदरीं क्षीरसमुद्रं क्षार० दधि० इक्षु० स्वादु० घृत० सुरासमुद्रं
गण्डान्तकं रुद्रलोकं ब्रह्म० विष्णु० ध्रुवमण्डलं सप्तर्षि० भीम० वायु० सूर्य० हाटकेश्वरं
धूम्रकेतुं लवणार्णवं ज्वालाकूटं । मन्दारपर्वतं मैनाक० चित्रकूट० गन्धमादन० निषध०
विन्ध्य० पर्यन्त० सह्य० बलाह० कङ्क० । कृतयुगं त्रेता० द्वापर० कलि० । ब्रह्मपुरा-
णं पद्म० भागवत० नारद० मार्कण्डेय० अग्नि० भविष्यत्० ब्रह्माण्ड० लिङ्ग० वाराह०
वायु० शिव० वामन० ब्रह्मवैवर्त० स्कन्द० गरुड० विष्णु० एकनामं बहुनामं सोमं कुमार
गो० अङ्गारकं हरिं सौम्यं शुक्रं गिरांपतिं वैद्युतीं भृगुसुतं सृष्टिकर्तारं सौरं गणपतिं सैहिकेयं
शिवं मयूरं केतुं ध्रुवं अनन्तं वाडवाग्निं अग्नीषोमौ हव्यवाहनं कव्यवाहनं चित्रभानुं ज्व
१२३ लनं वैश्वानरं हुताशनं बहुरूपं धनञ्जयं मत्यदेवं पावकं कालाग्निरुद्रं सर्वभूताधिपा

त्र्यम्बकं वासुकिनागराजं पुष्कर० तक्षक० चक्रहस्त० ऐलापत्र० दैत्याख्य० यातुधान०
शङ्खपाल० फणीश्वर० पद्म० महापद्म० नील० शेष० अनन्त० कुलिक० । ब्राह्मीं माहे-
श्वरीं कौमारीं वैष्णवीं वाराहीं नारसिंहीं ऐन्द्रीं ईशानीं दुर्गां गायत्रीं सावित्रीं सरस्वतीं
ग्रहान् लोकपालान् नागान् सागरान् वेतालान् किन्नरान् पिशाचान् सुपर्णान् गुह्यकान्
कूष्माण्डान् उच्छुष्मान् जलचरान् भूचरान् खेचरान् वाय्वाधाराञ्जन्तून् विश्वकर्माणं व-
सून् रुद्रान् आदित्यान् साध्यान् वेदान् इतिहासपुराणं ऋग्वेदं यजुर्वेदं सामवेदं अथर्व-
वेदं अथर्वाङ्गिरसं धर्मशास्त्राणि नक्षत्राणि नक्षत्राङ्गानि नक्षत्रदेवताः यज्ञान् अधिष्ठानदेवताः
इष्टियागं सोमयागं इन्द्राग्नी प्रकृतिं विकृतिं प्राप्यप्र कान् ग्राह्यग्राहकान् सोमपान् असोमपान्
समस्तादिदेवता यज्वान याजकान् विधेर्देवताः आग्रायणदेवताः धूपदेवताः ब्राह्मीं वाचं
परां पश्यन्तीं मध्यमां वैखरीं मन्त्रपान् बलियोगिनीः यज्ञपार्षदान् यज्ञपार्षदींश्च धर्मं
अर्थं कामं मोक्षं सत्यं दिशः विदिशः योगान् तारकान् संवत्सरान् ऋतून् मासान् अ-
मासान् अहोरात्रं सप्तलोकान् सप्तपातालान् सप्तद्वीपान् सप्तजिह्वान् सप्तहोतॄन् अष्टौव- गो०
सून् एकादशरुद्रान् द्वादशादित्यान् दशाङ्गिरसान् द्वादशसाध्यान् एकोनपञ्चाशन्मरुद्-
गान् द्वादश मेषादींल्लग्नान् शेषादीन्नागान् मेर्वादीन्पर्वतान् आनन्दादीन्योगान् कृत्तिका- १२१

दीनि नक्षत्राणि आदित्यादीन्ग्रहान् इन्द्रादीन्दशलोकपालान् वास्तोष्पतिदेवताः क्षेत्रपा-
लदेवताः ब्राह्म्याद्या मातृः गौर्याद्या मातृः दुर्गाद्या मातृः आत्मदेवताः परमात्मदेवता-
स्तर्पयामि । कण्ठोपवीती । एकैक० ॥ मनुगौतम० ते सर्वे तृप्तिमायान्तु गोपुच्छोदक-
तर्पणात् ॥ ऋषीन् तर्पयामि २ परमर्षीन् महर्षीन् श्रुतर्षीन् सप्तर्षीन् तपर्षीन् मनुर्षीन् वै-
ष्णवर्षीन् असुरर्षीन् सुरर्षीन् यक्षर्षीन् गन्धर्वर्षीन् दैत्यर्षीन् पिशाचर्षीन् सिद्धर्षीन् साध्य-
र्षीन् विद्याधरर्षीन् शैवर्षीन् बौधर्षीन् योगर्षीन् नागर्षीन् पर्वतस्थितर्षीन् पृथिवीस्थित-
र्षीन् अन्तरिक्षस्थितर्षीन् दिविस्थितर्षीन् जलस्थितर्षीन् सर्वर्षीन् ऋषिदेवताः ऋषिगोत्रा-
णि ऋषिछन्दांसि ऋषिपुत्रान् ऋषिपत्नीः आपस्तम्बं सत्यापाढं हिरण्यकेशं सनकं स-
नन्दनं सनातनं सनत्कुमारं कपिलं वोढं पञ्चशिखं जाबालिं अत्रिं वसिष्ठं पुलहं पुलस्त्यं
कश्यपं च्यवनं व्याघ्रं विष्णुं पराशरं पाराशर्यं वाल्मीकिं वत्सं भारद्वाजं शौनकं लौगा-
क्षिं कण्वं हारीतं जमदग्निं सुमन्तुं याज्ञवल्क्यं मनुं दक्षं भृगुं शङ्खं मरीचिं नारदं ऋषि-
गो० शृङ्गं कुशिकं गर्गं अगस्त्यं कुत्सं गौर्गुण्डिल्यं गौर्गुण्डीयं उपमन्युं करटं सूपकं देवलं
वर्षकर्णं शुनःशेपं प्रागाथं पावमान्यं क्षुद्रसूक्तान् महासूक्तान् सर्वर्षिगणान् तर्पयामि २
१२२ पिता पितामहश्चैव तथैव प्रपितामहाः । माता पितामही तद्वत्तथैव प्रपितामही । मा-

111

तामहाः सपत्नीका गोत्रसम्बन्धिबान्धवाः । ते सर्वे तृ० ॥ रौरवे पतिताः केचिद्ये महा-
रौरवे स्थिताः । सुवर्णहारिणो ये च क्रियालोपगताश्च ये । ये केचिदामयग्रस्ताः श्व-
श्रादिष्वात्मघातकाः । शृङ्गिदंष्ट्रिनखिव्यालैर्हता ये पापकर्मिणः । ते सर्वे ॥ ❀ अपस-
व्येन । उपन्तस्त्वा० ( पृ ) ❀ सुमन्तु-जैमिनि-वैशम्पायन-पैल-सूत्रकार-महाभाष्यकार-
महाभारत-धर्माचार्याः स्वधा नमस्तृप्यन्ता ३ ॥ जानकि-बाहवि-गार्ग्य-गालव-गौतम-शौ-
नक-शाकल्य-शाण्डल्य-बाभ्रव्य-माण्डूकेयान् स्वधा नमस्तर्पयामि ३ ॥ गार्गी स्वधान-
मस्तर्पयामि ३ । वाचक्नीं वचालनां आतिथेयीं सुलभां मैत्रीं कहोत्रं कौशीतकं ... कौ-
शीतकं अश्वलायनं महाश्वलायनं एतरीयं महैतरीयं गार्ग्यं वाष्कलं अजातवक्त्रं औदवा-
हिनं सौजामिं शौनकं अनुक्तगोत्रान् ऊर्ध्ववक्त्रान् अधोवक्त्रान् तिर्यग्वक्त्रान् पितॄन् पि-
तामहान् प्रपितामहान् मातॄः पितामहीः प्रपितामहीः मातामहान् प्रमातामहान् वृद्धप्र-
मातामहान् मातामहीः प्रमातामहीः वृद्धप्रमातामहीः गुरून् गुरुपत्नीः सखीन् सखिप-
त्नीः अमात्यान् अमात्यपत्नीः वसून् रुद्रान् आदित्यान् अग्निष्वात्तान् बर्हिषदः हवि-
ष्मन्तः सुकालिनः समानोदकान् सोमपान् सुकर्मस्थाञ्जन्तून् स्वकर्मयातनास्थान् सर्वान्
सर्वपत्नीः स्वधानमस्तर्पयामि ❀ शङ्खस्य त्रि० ( पृ ) इत्यादि श्लोकतर्पणं सर्वं कृत्वा

गो०

ततो वेदचतुष्टयीं सम्पाद्य । गायत्र्यै नमः । अद्य तावत् । पृथिव्याः अग्नेः ऋग्वेदस्य
ब्रह्मणः छन्दसां । अन्तरिक्षस्य वायोः यजुर्वेदस्य ब्रह्मणः छन्दसां । दिवः सूर्यस्य सा-
मवेदस्य ब्रह्मणः छन्दसां । दिशां चन्द्रमसः अथर्ववेदस्य ब्रह्मणः छन्दसां । आत्मनो०
चतुर्वेदेश्वरपूजनमच्छिद्रं सम्पूर्णमस्तु । यवोदकं नमः ॥ आपन्नोस्मि । नमो ब्रह्मणे ॥
ततो ब्राह्मणपृच्छां । गायत्र्यै नमः । तत्पुरुषाय० । सुभगायै० । अद्य तावत् रुद्रस्य वा
[विष्णोः] सानुचरस्य नन्दायाः सुनन्दायाः सुभगायाः सुशीलायाः सुरभेः वरका-
मधेनोः आत्मनो० पितुर्वा मातुः परलोके सुखसन्तारणार्थं रुद्रपूजनं धेनुपूजनमच्छि-
द्रं सम्पूर्णमस्तु ॥ यवोदकं नमः । धेनोः क्षमापुष्याणि ॥ या लक्ष्मीः सर्वभूतानां या
च देवेष्ववस्थिता । धे[illegible]रूपेण सा देवी मम पापं व्यपोहतु ॥ देहस्था या च रुद्राणां शंक-
रस्य सदा प्रिया । धेनुरू० ॥ विष्णोर्वक्षसि या लक्ष्मीः स्वाहा या च विभावसौ धेनुरू० ॥
चतुर्मुखस्य या लक्ष्मीर्लक्ष्मीर्या धनदस्य च । लक्ष्मीर्या लोकपालानां सा धेनुर्वरदास्तु
गो० मे ॥ स्वधा या पितृमुख्यानां स्वाहा यज्ञभुजामपि । सर्वपापहरा धेनुस्तस्माच्छान्तिं प्रयच्छ-
तु ॥ सर्वदेवानिमित्ताङ्गां सर्वदेवनमस्कृताम् । प्रयच्छामि महासत्वामक्षयाय शुभाय च ॥
१२४ ग्रीष्मान्तस्था च या लक्ष्मीः समुद्रान्तस्थिता तथा । शक्रचन्द्राग्निरुद्राणां सा धेनुर्वरदास्तु

म ॥ त्वं धेनो मम दासस्य भुक्तिं मुक्तिं च कांक्षिणः । आर्तस्येवाभियुक्तस्य प्रसादं कुरु सर्वदा ॥ अथ प्रतिग्रहीतुः पुष्पं धेनोरुपरि । प्रतिगृह्णामि देवि त्वां कुटुम्बार्थे विशेषतः । होमार्थमग्निहोत्रस्य कामधेनो नमोस्तु ते ॥ ॐ ह्रीं श्रीं स्फीं कुरुष्व प्रसादं भोः मम सुरभेऽद्य विष्णुभगिनि रुद्रदुहितः सर्वकामप्रदे प्रसादं कुरु २ ॥ न गोषु तुल्यं धनमस्ति किञ्चिद्दुह्यन्ति वाहन्ति हरन्ति पापम् । तृणानि भुक्त्वाप्यमृतं स्रवन्ति विप्रेषु दत्तं कुलमुद्धरन्ति ॥ उदकलशं० ॥ मन्त्रार्थः० ॥ अनन्तशाखकल्पाय० ॥ ॥ ॥ इति गोप्रदानविधिः ॥

—=-:०*:०-=—

॥ ॐ अथ दानप्रतिष्ठा ॥

कलशं शुभदं दिव्यं जलेन परिपूरितम् । दानेनास्य सदा सौख्यं शान्तिरस्तु गृहे मम
१ जलं ब्रह्ममयं साक्षाज्जीवितं सर्वदेहिनाम् । जलदानं तु तस्माद्ध वाञ्छितार्थप्रदायकम्
धारिणा पूरितं पात्रं तापत्रयहरं शुभम् । पितृणां तुष्टिदं सौख्यं गृहाण त्वं सुखाय मे
घोरायां याम्ययात्रायां क्षुत्पिपासाश्रमभया: । तेषां निवारणार्थाय सान्नं कुम्भं ददाम्यह
४ अन्नं ब्रह्मरसं साक्षाल्लोकानां प्राणरक्षकम् । अन्नदानेन वै कामान्भुक्त्वा सायुज्यमाप्नु
यात् ५ अन्नाद्याः साधुतां यान्ति लवणेन रसाश्च ये । नित्यं लवणदानेन मम सन्तु म
नोरथाः ६ सौभाग्यदं निष्कदानं नृभिः कार्यं प्रयत्नतः । सर्वकामप्रदं पर्वकालेषु च नि
शेषतः ७ अद्य तावत्० पितुर्वा मातुः आद्यमौर्ध्वदैहिके प्रथमे एकोद्दिष्टे श्राद्धे याम्यपु
अत्यन्तविश्रान्तिप्राप्त्यर्थं घटं सान्नं० ददानि २ प्रतिगृह्णामि ३ ॥ १ ॥ अन्नं ब्रह्मरसं
१ अन्नाद्या साधुतां० २ सौभाग्यदं० ३ अन्नपतेरन्नस्य नो देहि० ४ अद्य तावत्
 पितुः प्रथममासिके द्वितीये सौरिपुरे० अन्नं ददानि ३ ॥ २ ॥ शीतोष्णवातादिभय
हारकं कान्तिभाग्यदम् । लज्जादिशमनं वस्त्रं स्वस्तिदं मेऽस्त्वतः सदा १ युवा सुवासाः
 २ अद्य तावद् पितुः त्रिपाक्षिके तृतीये नगेन्द्रभवने वस्त्रं ददानि ॥ ३ ॥ सुगन्धद्रव्य

115

.नं० ॥ गन्धो मनोहरो भव्यः शान्तिदः सुखदः सदा । तत्प्रदानेन चैवाद्य शान्ति-
स्तु सदा मम १ कर्पूरादि शुभं विप्र ...णेमं सुपूजितम् । पुण्यगन्धस्थिता सा मे क-
ला प्रीयतां मम २ द्वितीयमासिके चतुर्थे सुगन्धद्रव्यं ददानि ३ ॥ ४ ॥ छत्राश्वदा-
॥ सम्पदां भूषणं छत्रं वर्षातपनिवारणम् । यात्रिकप्रीतिदं मार्गे शान्तिं यच्छतु मे गृ-
१ पञ्चपाक्षिके पञ्चमे शैलमुञ्जकपुरे छत्रं ददानि ॥ ५ ॥ गोधूमजनितं पिष्टं शिलायं-
विनिस्सृतम् । द्विजश्रेष्ट गृहाण त्वमतः शान्तिं प्रयच्छ मे ॥ तृतीयमासिके षष्ठे । क्रूरपुरे
गोधूमपिष्टं ददानि ३ ॥ ६ ॥ अन्नाद्याः साधुतां० । चतुर्थमासिके सप्तमे । क्रोञ्चपुरे लव-
णं ददानि ३ ॥ ७ ॥ गवामङ्गेषु तिष्ठन्ति भुवनानि चतुर्दश । यस्मात्तस्माच्छुभं मे स्या-
दिह लोके परत्र च १ पञ्चमासिके अष्टमे । विचित्रपुरे गां० ॥ ८ ॥ धान्यं यवा मा-
मुद्गमकायाद्यौषधानि वै । विष्णुदेहोद्भवान्यत्र सप्तसस्यानि शान्तये । ऊनषाण्मासिके
नवमे वह्नापदपुरे सप्तान्नानि ॥ ९ ॥ गुडमिक्षुरसोद्भूतं रसानां परमं वरम् । सर्वदेहिप्रि-
यमस्तुदानेन शान्तिदं मम १ स्वादुः पवस्व दिव्याय जन्मने साधुरिन्द्राय सुहवीतुनाम्ने । दा०
मादो मित्राय वरुणाय वायवे बृहस्पतये मधु आदाभ्यः २ षाण्मासिके दशमे । ना-
नाक्रन्दपुरे गुडं ॥ १० ॥ घर्मस्थाने महारौद्रे दंशादिजीवदूषिते । व्यजनं सुखदं तत्र १२७

पितृणामस्तु दानतः १ आवातवाहि भेषजं विवातवाहि यद्रपः । त्वं हि विश्वस्य भेषजं देवानां दूतये यमे २ सप्तममासिके एकादशे दुःखदपुरे व्यजनं दधानि । ११ ॥ ज्ञानाज्ञानकृतं पापं मया लोभकृतं च यत् । लोहशस्त्रप्रदानेन सर्वं नश्यतु तत्क्षणात् १ अष्टममासिके द्वादशे । घुर्घुरपुरे शस्त्रं दधानि ॥ १२ ॥ शीतोष्णवातादिभयहारकं कान्तिभाग्यदम् । शिरोलङ्करणं मेस्तु चोष्णीषं शान्तिदं सदा । नवममासिके त्रयोदशे । उज्ज्वलपुरे उष्णीषं दधानि ॥ १३ ॥ हिमशीतसमीराणां हसन्तीं च हसन्तिकाम् । लाङ्गारसंयुक्तां स्वान्पितृंस्त्वां ददाम्यहम् । दशममासिके चतुर्दशे । पर्जन्यपुरे अग्निभाण्डं दधानि ॥ १४ ॥ हिरण्यगर्भगर्भस्थं हेम बीजं विभावसोः । अनन्तपुण्यफलदं दानतोस्तु शिवाय मे । हिरण्यगर्भः० । एकादशमासिके पञ्चदशे । रौद्रपुरे सुवर्णं दधानि ॥ १५ ॥ घर्मदेशे घोररूपे मक्षिकादिविदूषिते । तेषां निवारणार्थाय तालवृन्तं दधाम्यहम् ॥ ऊनसांवत्सरिके षोडशे । शीताभिधानपुरे चामरं दधानि ३ ॥ १६ ॥

८१० चतुर्थदिवसे धूपदीपादि षोडशपिण्डोदककर्म केवलं नामगोत्ररहितं प्रेतशब्दमुच्चार्य कार्यम् ॥ पञ्चवर्षादूनस्य बालकस्य जाक्रियाकर्म न कार्यं । पञ्चवर्षाधिकस्य कार्यम् ।

१२८ तृतीयदिवसे धूपदीपादि दशपिण्डोदकक्रिया केवला ॥

BECLATEC 159

BRIJ NATH BHAT
LANE NO:- 5
BAWANI NAGAR
TALLAB TILLOO
JAMMU TAWI

PH. NO:- P.P
553341

Batep Gark —— Tandon
Cassette Shop in Katre of Tandons
Agency